# PREFACE.

The present edition of the Hiranyakesi Grihyasutra, which fills the 19th and 20th Prasnas of the great Kalpa of the Hiranyakesas, is based on the following materials —

I *MSS of the text alone*

1 C, No 55 Bühler Sanskr MSS in the India Office Library, fols 51, ll 18, Sake 1733,

2 E, No 33 Sanskr MSS of the Court and State Library at Munich (Professor Haug's collection) fols 138, ll 40, Sake 1785 containing the whole Kalpasutra of the Hairanyakesas (the Grihyasûtra filling fols 96—108),

3 F, No 211b Cod MSS Orient of the University Library at Goettingen, fols 45, ll 20, Sake 1738,

4 H a MS belonging to Professor Hillebrandt and lately copied at Benares pp 42 (numbered pp 421—462), about ll 20 [1]

II *MSS of the text with the commentary,*

5 A, a copy of a Bombay MS made by the late Dr Schönberg, which comprises the first twenty-six Khandas of Prasna I,

6 D, No 56 Bühler Sanskr MSS in the India Office Library, fols 97, ll 22, without date

III *MSS of the commentary alone,*

7 B No 41 Cod Sanskr of the Court and State Library at Munich (Professor Haug's collection), fols. 97, ll 18, without date,

---

[1] As I received this MS after the printing of my text had been begun I have not been able to give its complete *varietas lectionum* in the notes. But it has been added below

8 G, a modern MS in the possession of Professor Kielhorn, pp 127 ll 20

As regards the relation of the MSS of the text to each other, they appear to go back to one Devanagari copy, which probably has been copied from a Grantha MS The latter conjecture is suggested by the fact that the Charana has its original home in southern India as well as by the circumstance, that Matridatta quotes in four passages[1] readings of the Udichyas or Northerners which with two exceptions are not found in my MSS

The MS E it would seem, stands furthest from the *codex archetypus* For it shows the greatest number of independent readings Thus it inserts —I, 1, 21 द्व्याणि I 4 2 प्रज्ञात, I, 7, 21 मर्पिमियस्य जुहोति, I 13 19 सद्य वा प्राश्य Further it omits —I, 21, 2 मप्तम पदमजस्थाप्य जपति I 22 2 श्रग्निम II, 19, 6 चेदेष्यच्च पृथक्पृथक् Finally it offers —I, 2 18 सराधनी for सराधन्ते (a difference noted by the commentary) I 10 5 श्रन्तरेण for श्रपरेण, I, 10, 7 स्वाहाकार रन्ति for श्रस्याहाकारे II, 4 9 चतस्रो धात्रौ for द्वादशाहुती, II, 9 9 कपालेषु for पलाशेषु II 10, 7 प्रायश्चित्तपर्यन्त for व्याहृतिषु

As regards C my materials indicate that it comes nearest to the *codex archetypus* This MS has very few independent readings only in some cases it agrees with one or the other of the group just described Thus it reads with E H II 4 15 सा मयाजीति with D F H I 14 ७ यात्र with E F H I 17 1 त्रिया ना रात्रि

The facts just stated permit us to draw up the following pedigree




*As regards the MSS of the commentary it will suffice to* note that G agrees more closely with A and D than with B but that the latter copy in spite of numerous clerical errors is most important for restoring the original readings

As Matridatta s commentary is very full and nearly every where clearly shows his readings of the Sutras I have tried to restore his text as far as the prose portions are concerned For the Mantras the explanation of which he in general omits I very much felt the want of a good Grantha MS which no doubt would have solved many difficulties As I was unable to procure such a copy from southern India I have consulted besides the published Grihyasutras the Mantrapatha of Apastamba s Grihyasutra[1] the Grihyasutras of Baudhayana[2] Bharadvaja[3] and Manu[4] and the Mantrabrahmana of Gobhila s Grihyasutra[5] in order to remove the numerous corruptions Two longer passages however II 3 7 and II 7 2 have withstood all my attempts at emendation The proposed corrections have in every case been inserted in the notes not in the text

The language of the Grihyasutra shows many irregularities Thus we have — त्रियृता fem for त्रियृत I 1 17 यथापद for यथापाद

[1] The copy used is a transcript made by Dr Winternitz and kindly placed at my disposal

[2] No 33 Buhler Sanskr MSS in the India Office Library

[3] A copy kindly procured by Dr Peterson from the library of the Maharao of Bundi

[4] No 38 Buhler Sanskr MSS in the India Office Library

[5] *A copy was kindly lent to me by Prof Knauer*

I, 1, 21; सरस्यते for सरस्यति I, 2, 9; आहुतीभिः for आहुतिभिः I, 3, 7; परिदातया उ for परिधातया उ I, 4, 2, ससिद्धम् (a Prakritic form) for समृद्धम् I, 4, 6, अभ्यात्मन् for अभ्यात्मम् I, 5, 8; पुष्करसादिः for पौष्करसादिः I, 6, 8; योधम् for यौधम् I, 6, 9 12, 17. 21, 2; स्नायनीय for स्नानीय I, 9, 19; अभिष्टीः for °ष्टिः I, 11, 1; नसि for भासि I, 16, 3, अधीयीत् for अधासीत् । अदांचीत् for अमदत् । उदंचीत् for उदधिचत् I, 17, 5; भूयास्य for भूयास्त I, 18, 3; अभ्यावृत्य for अभ्यावर्त्यं I, 20, 2; अतिक्रामीः for °क्रमीः I, 20, 10, देहनि for देहलौ I, 22, 6; वाचंनियमौ for वाचंयमौ I, 22, 10; सह-चर्या for सहचरी I, 24, 5; अनभियस्तीः for °स्तिः I, 26, 23; स्यूणो for स्थूणे I, 27, 7; व्याहृतीभिः for °तिभिः II, 1, 3; अभिजिघ्य for अभिघाय II, 4, 17; चान्दन° °यजत्येन II, 9, 7, विन्द्यात् for विद्यात् II, 12, 4; ऊर्णास्तुकान् for ऊर्णास्तुकाः II, 12 8; यूद्ध्यम् for यौद्धम् II, 12, 8; पृणाहि for पृणीहि II, 17, 3, एकवेद्यान्त for एकवेद्यन्त II, 19, 6.[1]

To a different class belong the cases of erroneous nasalization in देवं मेधा I, 8, 4, इतं मे I, 13, 13, and probably in समितां I, 27, 4 (compare Rig Prat XIV, 24); the addition of a Visarga caused by a following स in अपोशानः for °न I, 5, 10, the cases of a faulty substitution of *e*, *ai* for ई in:—श्रोषधे I, 10, 6. 11, 3; कल्यैः I, 27, 4 and °वन्ध्यैः II, 16, 8. All these forms are owing to a negligent pronunciation, and the same remark applies to द्यां for ज्यां I, 15, 3; द्यौपीः for च्यौपि I, 18, 3 (compare Rig. Prat XIV, 19); असूदम् for असोदम् । विश्याते for विश्याते I, 20, 2; धेनुगा for धेनुका I, 25, 1; अग्नेयक्षीणि for अग्ने अक्षीणि II, 3, 7; जायथ and जायत for जाग्रथ and जाग्रत II, 4, 5; क्रेयावरं for क्रेयापरं II, 14, 3. Finally जगम्या for जगम्याः or जगम्यात् I, 8, 4 may be noted here.

New words occur also both in the Sūtras and the Mantras, but the readings of most of them are doubtful I note here अनुमर्जिन्, अनुसंसृजिन and अनुपक्रिचा, all three explained by the commentary

As regards the original form of the Sūtra, the 20th Khanda of the first Praśna is without a doubt spurious.[2] Possibly the three last Khaṇḍas of the second Praśna may also be later additions, for the commentator says at the end of chapter II, 17 समाप्तानि च गृह्यकर्माणि.

[1] In many cases these forms are characterized by the commentary as अपपाठ or प्रमादपाठ, sometimes with the alternative छान्दस.

[2] See note to I, 26, 22

The age and the relation of the Hiranyakeśas to the other schools of the Black Yajurveda have been discussed by Professor Bühler S B E II, pp XVI, XXIII

Matridatta seems to have written before the end of the sixteenth century A D, as he is quoted by Kamalakarabhatta, who wrote the Nirnayasindhu in Vikramasamvat 1668[1] He frequently quotes the opinions of earlier commentators and gives sometimes as many as three different opinions He seems to have been very learned in the science of the sacrifice, but his acquaintance with Sanskrit grammar was only superficial For he commits numerous grammatical mistakes and uses such forms as प्रक्षाल्नयित्वा I, 2, 11, श्रानयित्वा I, 5, 8, प्रत्यङमुख्वा I, 20, 1, रजस्वलीं I, 24, 7, वप्तान II, 6, 4, अपूपादिमव II, 14, 7

In conclusion I have to thank Professor BUHLER, at whose recommendation I undertook the edition of this work, for his continued assistance during its preparation and printing, to the Imperial Academy of Sciences of Vienna for its generous patronage, to Professors HILLEBRANDT, KIELHORN, KNAUER, PETERSON and to Dr WINTERNITZ, as well as to the Chief Librarians of the India Office, of the University of Goettingen and of the Court and State Library in Munich for the liberal manner in which they have lent me their MSS

J KIRSTE

---

[1] See Aufrecht, Cat. p 279ᵃ

# APPENDIX.

## Varietas Lectionum of the MS H

(See also above the preface and the notes to I 11 5 20 2 24 3. II 3 3 12 10 15 3)

### I,

1, 10 °भ्रमदधाति । 11 प्रागग्रेर्दं° । 2, 6 कुमारमुप° । 3, 5 पुत्र । 7 °प्टकद्वि ह्य° । सहुतस्तुते । 14 °मम्मान । 4, 2 परिधायपयति । 3 पुरुषो । 5 उत्तरे ना° । 5 2 प्रदनयचंमा° । 6, 10 °याज्ञल्नी क° । 7, 6 प्रासोद्यो । 17 प्रथमोयास्य । 8, 7 सतपतमचा° । 9, 16 केशश्मश्रूणु । 10, 4 दैवेभ्य । 11 7 प्रगृह्य । 12, 2 अर्को । 5 करिष्यता । 13 1 यथां । 12 तृणान्यमु । 14 4 यदितो मासतिमन्यायध्य । 15 3 नायनो । 16 8—13 यातेपते । 16 यदुपस्र° । यथैकमु° । 17 अनिद्गुत ते परिप्टुत । 17, 1 सालोकृतो । 5 उल्का कपोत । 18 3 स्य मा च्योढ्य । 5 दिशो दिश । 19, 7 सांम्ये प्रजा । पौत्रमघन्त री । यिकेन्तुर । 21 6 °धियर्याति । 22, 9 पृथा निर्पोदतु । 24 6 प्रयुक्ते । 27, 1 °भ्यतरपामू° । 28, 1 मु शचीपति the first time ।

### II,

3, 1 °ह यजति । 8 °मालभ्यते । 4, 5 om थय । 17 om हुम । 6, 13 ययायाद्र । 7, 2 हत्यमुपाश्यपात्याञ्जिमच्छ° । 9, 2 सम यतव्य । 10 तत्र यजते । 14, 3 क्रियायश्नित पि° । 4 शाखाखा खापकत । 15 2 पितृन्त्सा° । 3 अर्येनासुप्राकराति । 4 प्राश्नति प° । 10 °यहानाय । 16, 5 स° म° स° पि° स य the third time । 10 यन्नो° ए° p m यमोन्द s m । 17 1 भायवगो । 3 प्र दिर्यन्थि । 18, 6 अपाटोन्य° । 19, ( मु ययमे मुत ययमे । 20, 9 अपाटोन्य° । 10 om या यसेन ।

# विषयानुक्रमणी

# अथ हिरण्यकेशिगृह्यसूत्रम्

उपनयनं व्याख्यास्यामः । १ ।
सप्तवर्षं ब्राह्मणमुपनयीत । २ ।
एकादशवर्षं राजन्यं द्वादशवर्षं वैश्यम् । ३ ।
वसन्ते ब्राह्मणं ग्रीष्मे राजन्यं शरदि वैश्यम् । ४ ।
आपूर्यमाणपक्षे पुण्ये नक्षत्रे विशेषेण पुंनामधेये । ५ ।
युग्मान्ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा । ६ ।
आशितस्य कुमारस्य केशान्वापयित्वा स्नातमलंकृतम् । ७ ।
अहतं वासः परिधाप्य । ८ ।
प्राचीनप्रवण उदीचीनप्रवणे प्रागुदक्प्रवणे समे वा देश उद्धत्यावोक्ष्य । ९ ।
अग्निं मथित्वा लौकिकं वाहृत्य न्युप्योपसमादधाति । १० ।
प्रागग्रैर्दर्भैरग्निं परिस्तृणाति । ११ ।
अपि वोदगग्राः पश्चात्पुरस्ताच्च भवन्ति । १२ ।
दक्षिणानुत्तरान्करोत्युत्तरानधरान्यदि प्रागुदगग्राः । १३ ।

---

I 1, 7 °स्याशि° C °स्याशितस्य F अशि° D G B s m
I 1 9 उदृचीन° F
I 1, 12 पश्चापु° F
I 1 13 °दग्रान C

दक्षिणेनाग्निं ब्रह्मायतने दर्भान्संस्तीर्य । १४ ।

मयि गृह्णामि ॥ यो नो अग्निः ॥ इति द्वाभ्यामात्मन्नग्निं गृहीत्वा । १५ ।

उत्तरेणाग्निं दर्भान्संस्तीर्य यथार्थं द्रव्याणि प्रयुनक्ति । १६ ।

अश्मानमहतं वासोजिनं मौञ्जीं मेखलां त्रिवृतां ब्राह्मणस्य ज्यां राजन्यस्यावीसूत्रं वैश्यस्य बैल्वं पालाशं वा दण्डं ब्राह्मणस्य नैय्यग्रोधं राजन्यस्यौदुम्बरं वैश्यस्य । १७ ।

एकविंशतिदारुमिध्मं संनह्यत्याहुतिपरिमाणं वा । १८ ।

तस्मिञ्छम्याः परिधीनिध्म उपसंनह्यति । १९ ।

दर्वीं कूर्चमाज्यस्थाली प्रणीताप्रणयनं येन चार्थः । २० ।

सकृदेव सर्वाणि यथोपपदं वा । २१ ।

एतस्मिन्काले ब्रह्मा यज्ञोपवीतं कृत्वाप आचम्यापरेणाग्निं दक्षिणातिक्रम्य ब्रह्मसदनात्तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशति । २२ ।

समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वान्येन नखाच्छित्त्वाद्भिरनुमृज्य पवित्रान्तर्हिते पात्रेप आनीयोपबिलं पूरयित्वोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूयोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैरपिदधाति । २३ ।

---

I 1 15 T S 5 7 9 1 । °त्मन्नग्नि D

I 1 16 दर्भान् प्र° F

I 1 17 त्रिवृता see the comm । ज्यायाः वा F । नैयग्रोध C नयग्राध F

I 1 19 तस्मिञ्छ° F तस्मिं छ CDE । ध्नमुप° DE

I 1 20 कुर्च D । DF add प्रावरणीयान् before येन but see the comm । B joins this sutra with the following

I 1 21 E ins द्रव्याणि after सर्वाणि । यथापपाद all MSS but see the comm

तिरःपवित्रं प्रोक्षणीः संस्कृत्य यथा पुरस्ताद्बिलवन्त्युत्तानानि
कृत्वा विषायेध्मं त्रिः सर्वाभिः प्रोक्षति । २४ ।
दर्वीं निष्टप्य संमृज्य पुनर्निष्टप्य निदधाति । २५
संमार्गानभ्युक्ष्याग्नावादधाति । २६ ।
आज्यं विलाप्य पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरु-
प्योदीचोऽङ्गारान्निरूह्य तेष्वधिश्रित्यावद्योत्य दर्भतरुणा-
भ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान्प्रत्यूह्यो-
दगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय प्रति-
वेग्नावाधाय । २७ । ॥ १ ॥

---

शम्याभिः परिदधाति । १ ।
अपरेणाग्निमुदीचीनकुम्बां मध्यमां निदधाति । २ ।
दक्षिणेनाग्निं संस्पृष्टां मध्यमया प्राचीनकुम्बाम् । ३ ।
उत्तरेणाग्निं संस्पृष्टां मध्यमया प्राचीनकुम्बाम् । ४ ।
अपरेणाग्निं प्राङ्मुख उपविशति । ५ ।
दक्षिणतो यज्ञोपवीत्याचान्तः कुमार उपविश्यान्वारभते।६।
अथ परिषिञ्चति । ७ ।
अदितेनुमन्यस्व ॥ इति दक्षिणतः प्राचीनम् । ८ ।

---

I, 1, 24 प्रोक्षति F
I, 1, 25 समज्य E
I 1, 27 पवित्रेग्ना° all MSS except C s m पवित्रे म°, which the comm, too has without a remark

अनुमतेनुमन्यस्व॥ इति पश्चादुदीचीनम्। सरस्वतेनुमन्यस्व॥
इत्युत्तरतः प्राचीनम्। ९।
देव सवितः प्रसुव॥ इति सर्वतः प्रदक्षिणम्। १०।
परिधिष्वेध्ममङ्क्त्वाभ्यादधाति।
अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेन्द्धि।
वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय।
स्वाहा॥ इति। ११।
अथ दर्व्या जुहोति। १२।
उत्तरं परिधिसंधिमन्ववहृत्य दर्वीम्। प्रजापतये मनवे स्वाहा॥
इति मनसा ध्यायन्दक्षिणाप्राञ्चमृजुं दीर्घं संततं जुहोति। १३।
दक्षिणं परिधिसंधिमन्ववहृत्य। इन्द्राय स्वाहा॥ इति प्राञ्च-
मुदञ्चमृजुम्। १४।
आघारावाघार्याज्यभागौ जुहोति। १५।
अग्नये स्वाहा॥ इत्युत्तरार्धपूर्वार्धे। सोमाय स्वाहा॥ इति
दक्षिणार्धपूर्वार्धे। १६।
तावन्तरेणेतरा जुहोति। १७।
युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम्।

---

I, 2, 9 सरस्वतेनु॰ Bhar I, 4 Āp 2, 3, Baudh I, 4, but Gobh 1 3 3 has सरस्वत्यनुमन्यस्व।

I 2, 10 सवितु प्रसव E; T S 1, 7, 7, 1

I, 2, 11 °दध्मासि D। चेन्द्धि is probably a corruption of चेद्ध, or चेद्ध Āśv I, 10, 12 and Bhar I 4, but in the latter too, चेद्ध is followed by स्वधिषि।

I, 2, 15 B omits आघारावाघार्य।

I, 2, 18 कर्म is superfluous and against the metre but it is found too in the versions of Baudh I, 5 and Bhār I 5

त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान्पुरुषान्सनेम ।
स्वाहा ॥
या तिरश्ची निपद्यसेऽहं विधरणी इति ।
तां त्वा घृतस्य धारयाग्नौ संराधनीं यजे । स्वाहा ॥
संराधन्यै देव्यै स्वाहा ॥ प्रसाधन्यै देव्यै स्वाहा ॥ इति । १८ । ॥२॥

सर्वदर्विहोमाणामेष कल्पः । १ ।
मन्त्रान्ते नित्यः स्वाहाकारः । २ ।
अमन्त्रासु । अमुष्मै स्वाहा ॥ इति यथादेवतम् । ३ ।
भूः ॥ भुवः ॥ सुवः ॥ इति व्याहृतिभिर्जुहोत्येकैकशः समस्ता-
भिश्च । ४ ।
आयुर्दा अग्ने ॥ इत्येषा ।
आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने ।
घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमम् ।
स्वाहा । ५ ।
इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥

I, 2, 18 गाश्वान्पु॰ F । निपद्यसेऽहं Bhar I, 5, Baudh I, 5, Āp M II, 8, 5, while Gobh M I, 5, 6 gives निपद्यसे । सराधनी F. ॰धनि Baudh I, 5 । स्वाहा is omitted by Āp M II, 8, 5 and Gobh M I, 5 6 । D has only the pratīka of this sūtra

I, 3, 1 सर्वदर्विहो॰ F.

I, 3, 3 B D om अमन्त्रासु ।

I, 3, 5 आयुर्दाग्ने E । T S 1, 3, 14, 4 । D om आयुर्दा देव॰ ॰स्वाहा । गृणानो Bhār I, 5, Baudh II, 5, Āp M II, 2, 1, but Ath V II, 13, 1 and Maitr S IV, 12, 4 वृणानो ।

I, 3, 6 T S 2, 1, 11, 6 । 2, 5, 12, 3 । A om स॰ ॰अग्ने ।

त्वमग्ने अयास्यया सन्मनसा हितः ।
अया सन्हव्यमूहिषेया नो धेहि भेषजम् । स्वाहा ॥
प्रजापते ॥ इत्येषा । ६ ।
यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् ।
अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे ॥
अग्नये स्विष्टकृते सुहुतहुते सर्वहुत आहुतीनां कामानां स-
मर्धयित्रे स्वाहा ॥ इत्युत्तरार्धपूर्वार्धेसंसक्तामितराभिरा-
हुतीभिर्जुहोति । ७ ।
अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति पुरस्तात्स्विष्ट-
कृतः । ८ ।
चित्तं च स्वाहा ॥ चित्तिश्च स्वाहा ॥ इति जयाञ्जुहोति ।
चित्ताय स्वाहा ॥ चित्तये स्वाहा ॥ इति वा । ९ ।
अग्निर्भूतानामधिपतिः स मावतु ॥ इत्यभ्यातानान् । १० ।
अस्मिन्ब्रह्मन्नस्मिन्क्षत्रे ॥ इत्यभ्यातानेष्वनुषजति । ११ ।
पितरः पितामहाः ॥ इति प्राचीनावीती जुहोत्युपतिष्ठते
वा । १२ ।

---

I, 3, 6 The metre requires the separation of अया in each pada । T S 1, 5, 14, 2 । D has only the pratika of this sutra

I, 3, 7 सुहुत appears to be a gloss, but is found Baudh I, 7 Ap 2, 7 and Āśv I, 10 23 । स्विष्टकृते E । °राहुतिभिर्जु° all MSS, but see the comm

I, 3, 8 D ins यथा before पुरस्ता° ।

I, 3, 9 T S 3, 4 4

I, 3, 10 T S 3 4, 5

I, 3, 12 T S 3 4, 5

चृतापाडृतधामा ॥ इति राष्ट्रभृतः । पर्यायमनुद्रुत्य । तस्मै
स्वाहा ॥ इति पूर्वामाहुतिं जुहोति । ताभ्यः स्वाहा ॥
इत्युत्तराम् । १३ ।

अग्नेणोत्तरं परिधिसंधिमश्मानं निधाय दक्षिणेन पादेन
। १४ । ॥ ३ ॥

---

कुमारमास्थापयति ।
आतिष्ठेममश्मानमश्मेव त्वं स्थिरो भव ।
प्रमृणीहि दुरस्यून्त्सहस्व पृतनायतः ॥ इति । १ ।
अथैनमहतं वासः परिधापयति पूर्वं निधाय ।
या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितोददन्त ।
तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥
परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिदातवा उ ॥
जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा ।
शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व ॥ इति । २ ।
परिधायाभिमन्त्रयते ।
परीदं वासो अधिधाः स्वस्तयेभूरापीणामभिशस्तिपावा ।

---

I 3 13 T S 3 4 ‾ । °द्रुत्य° D °द्रत्य F

I 4 1 °स्थापत्या F । °प्रमष्ट स्थि D । स्थिरा भव F

I 4 2 F ins प्रजात before निधाय । °न्तंर स F । परिधत्स्वा A । कृणातु F । परिदातवा is no doubt a corruption for परिधातवा which gives G p m and which is found Bhar I 5 Baudh II 5 Ap M II 2 6 and Ath V II, 13 2 । जीव A E F । D gives only the pratika of this sutra

I 4 3 वासोधि° C F E । °धिथा A । °पीनाम° A

त्वमग्ने अयास्यया सन्मनसा हितः ।
अया सन्हव्यमूहिषेया नो धेहि भेषजम् । स्वाहा ॥
प्रजापते ॥ इत्येषा । ६ ।
यदस्य कर्मणोत्यरीरिच यद्वा न्यूनमिहाकरम् ।
अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे ॥
अग्नये स्विष्टकृते सुहुतहुते सर्वहुत आहुतीनां कामाना स-
मर्धयित्रे स्वाहा ॥ इत्युत्तरार्धपूर्वार्धेसंसक्तामितराभिरा-
हुतीभिर्जुहोति । ७ ।
अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति पुरस्तात्स्विष्ट-
कृत । ८ ।
चित्तं च स्वाहा ॥ चित्तिश्च स्वाहा ॥ इति जयाञ्जुहोति ।
चित्ताय स्वाहा ॥ चित्तये स्वाहा ॥ इति वा । ९ ।
अग्निर्भूतानामधिपतिः स मावतु ॥ इत्यभ्यातानान् । १० ।
अस्मिन्ब्रह्मन्नस्मिन्क्षत्रे ॥ इत्यभ्यातानेष्वनुषजति । ११ ।
पितर पितामहा ॥ इति प्राचीनावीती जुहोत्युपतिष्ठते
वा । १२ ।

---

I 3 6 The metre requires the separation of अया in each pada । T S 1 5 14 २ । D has only the pratika of this sutra

I 3 7 सुहुत appears to be a gloss but is found Baudh I Ap 2 7 and Asv I 10 23 । स्विष्टकृत E । त्याहुतिभिर्जु॰ all MSS । but see the comm

I 3 8 D ins यथा before पुरस्ता॰ ।

I 3 9 T S 3 1 4

I 3 10 T S 3 4 5

I 3 12 T S 3 4 ,

च्छतापाइतधामा ॥ इति राष्ट्रभृतः । पर्यायमनुद्रुत्य । तस्मै स्वाहा ॥ इति पूर्वामाहुतिं जुहोति । ताभ्यः स्वाहा ॥ इत्युत्तराम् । १३ ।
अग्रेणोत्तरं परिधिसंधिमश्मानं निधाय दक्षिणेन पादेन । १४ । ॥ ३ ॥

---

कुमारमास्थापयति ।
आतिष्ठेममश्मानमश्मेव त्वं स्थिरो भव ।
प्रमृणीहि दुरस्यून्सहस्व पृतनायतः ॥ इति । १ ।
अथैनमहतं वासः परिधापयति पूर्वं निधायं ।
या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितोऽददन्त ।
तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥
परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिदातवा उ ॥
जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा ।
शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व ॥ इति । २ ।
परिधाप्याभिमन्त्रयते ।
परीदं वासो अधिधाः स्वस्तयेऽभूरापीणामभिशस्तिपावा ।

---

I 3 13 T S 3 4 ~ । °द्रुत्य D °द्रुत्य F

I 4 1 °स्थापत्या F । °श्मेव स्थि D । स्थिरा भव F

I 4 2 E ins प्रज्ञात before निधाय । °र्जर स F । परिधत्स्वा A । कृणातु F । परिदातवा is no doubt a corruption for परिधातवा which gives C p m and which is found Bhar I 5 Baudh II 5 Ap M II 2 6 and Ath V II 13 2 । जरेय A E F । D gives only the pratika of this sutra

I 4 3 वासाधि C F E । धिया A । °पीनाम° A

शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजा स जीवन्॥ इति। ३।

अथैनं मेखलया नाभिदेशे त्रिः प्रदक्षिणं परिव्ययति। द्विरित्येके।

या दुरिता परिबाधमाना शर्मवरूथे पुनती न आगात्।
प्राणापानाभ्यां बलमावहन्ती स्वसा देवानां सुभगा मेखलेयम्॥ इति। ४।

उत्तरतो नाभेस्त्रिवृतं ग्रन्थिं कृत्वा दक्षिणतो नाभेः परिकर्षति। ५।

अथास्मा अजिनमुत्तरीयं करोति।

मित्रस्य चक्षुर्धरुणं धरीयस्तेजोयशस्वि स्थविरं समिद्धम्।
अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं धत्स्वासौ॥
अदितिस्ते कक्षां बधातु वेदस्यानुवक्तवै मेधायै श्रद्धाया अनूक्तस्यानिराकरणाय ब्रह्मणे ब्रह्मवर्चसाय॥ इति। ६।

---

I 4, 3 जीव A E F । विभया E । चार्यो, thus also Āp M II, 2 5 but चार्यो Bhār I 13 and चार्यै Gobh M I, 1, 6 point to चार्यो as original reading Instead of विभजा स one might read विभजासि according to Bhar I 6 13 Āp M I c and Ath V XIX 24, 6 Baudh II, 5 has विभजा सुजीवन । D has only the pratika of the mantra

I, 4 4 पुनती A । The same form of the last pada with a redundant syllable occurs also Bhar I, 6 Baudh II 5 Āp M II, 2 9 । D gives only the pratika of this sutra

I, 4, 5 दक्षिणता F

I 4, 6 समिद्धम् is apparently a prakrit form found also Bhar I 6 Baudh II 5 Āp M II, 2, 11 for समृद्धम् Sankh II, 1, 30 । जरिष्णु F जरिष्णु which is also found Bhar I 6 Baudh II, 5, Āp M II 2 11, seems to be corrupt Sankh II, 1, 30 धरिष्णु । कक्ष F । वेदस्या॰ F । D gives only the pratika of this sutra

कृष्णाजिनं ब्राह्मणस्य रौरवं राजन्यस्य बस्ताजिनं वैश्यस्य। ७।

अथैनं परिददाति ।

परीममिन्द्र ब्रह्मणे महे श्रोत्राय दध्मसि ।

अथैनं जरिमा णयेज्ज्योक्श्रोत्रे अधिजागरत् ॥ इति ब्राह्मणम् ।

परीममिन्द्र ब्रह्मणे महे राष्ट्राय दध्मसि ।

अथैनं जरिमा णयेज्ज्योग्राष्ट्रे अधिजागरत् ॥ इति राजन्यम् ।

परीममिन्द्र ब्रह्मणे महे पोषाय दध्मसि ।

अथैनं जरिमा णयेज्ज्योक्पोषे अधिजागरत् ॥ इति वैश्यम् । ८ ।

तमपरेणाग्निमुदञ्चमुपवेश्य हुतोच्छेषणं प्राशयति । त्वयि मेधां त्वयि प्रजाम् ॥ इत्येतैः संनतैः । ९ ।

पृषदाज्यमेके प्राशयन्ति । १० ।

योगे योगे तवस्तरम् ॥ इममग्न आयुषे वर्चसे कृधि ॥ इति द्वाभ्यां प्राश्नन्तं समीक्षते । ११ ।

प्राशयन्त्येके । १२ ।

आचान्तमुपस्पर्शयित्वाभिमन्त्रयते ।

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।

---

I 4, 8 णयेज्यास॰ C E F । ॰त्रेधिजा॰ C p m । णयेज्योस॰ C F F । ॰ष्ट्रेधिजा॰ C p m । णयेज्यास॰ C E F । ज्याक्पो॰ F । ॰पेधिजा C p m । ॰जारत F । D gives only the pratika of the mantra

I 4 9 T A 10 44 (Calc ed p 916)

I 4 10 प्राशयति F

I 4 11 ॰रमिमग्न E । T S 1 1, 2, 1 2 3 10 3

I, 4 12 B D G om this sutra but give the comm

प्रजासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः॥ इति । १३ । ॥ ४ ॥

प्रथमः पटलः

---

आगन्त्रा समगन्महि प्र स मृत्युं युयोतन ।
अरिष्टाः संचरेमहि स्वस्ति चरतादिह ॥
स्वस्त्या गृहेभ्यः ॥ इति प्रदक्षिणमग्निं परिक्रामन्तमभिमन्त्रयते । १ ।
अथैनमभिव्याहारयति । ब्रह्मचर्यमागामुप मा नयस्व ब्रह्मचारी भवानि देवेन सवित्रा प्रसूतः ॥ इति । २ ।
तं पृच्छति । ३ ।
को नामासि ॥ इति । ४ ।
असौ ॥ इत्याचष्टे यथानामा भवति । ५ ।
स्वस्ति देव सवितरहमनेनामुनोदृचमशीय ॥ इति नामनी गृह्णाति । ६ ।
शं नो देवीरभिष्टय आपो भवन्तु पीतये। शं योरभिस्रवन्तु नः॥ इति मार्जयते । ७ ।
अथास्य दक्षिणेन हस्तेन दक्षिणमंसमन्वारभ्य सव्येन सव्यं

व्याहृतिभिः सावित्र्येति दक्षिणं बाहुमभ्यात्मनुपनयते।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-
भ्यामुपनयेऽसौ ॥ इति च। ८।

अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति।
अग्निष्टे हस्तमग्रभीत्सोमस्ते हस्तमग्रभीत्सविता ते हस्त-
मग्रभीत्सरस्वती ते हस्तमग्रभीत्पूषा ते हस्तमग्रभीद्बृह-
स्पतिस्ते हस्तमग्रभीन्मित्रस्ते हस्तमग्रभीद्वरुणस्ते हस्त-
मग्रभीत्त्वष्टा ते हस्तमग्रभीद्धाता ते हस्तमग्रभीद्विष्णुस्ते
हस्तमग्रभीत्प्रजापतिस्ते हस्तमग्रभीत् ॥ इति। ९।

सविता त्वाभिरक्षतु मित्रस्त्वमसि धर्मणा। अग्निराचार्यस्तव॥
देवेन सवित्रा प्रसूतो बृहस्पतेर्ब्रह्मचारी भवासावपोऽशानः
समिध आधेहि कर्म कुरु मा दिवा स्वाप्सीः॥ इत्येनं
संशास्ति। १०।

अथास्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृद-
यदेशमभिमृशति।

मम हृदये हृदयं ते अस्तु मम चित्तं चित्तेनान्वेहि।
मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यम्॥
मामेवानुसंरभस्व मयि चित्तानि सन्तु ते।
मयि सामीच्यमस्तु ते मह्यं वाचं नियच्छतात्॥ इति। ११।
प्राणानां ग्रन्थिरसि स मा विस्रसः॥ इति नाभिदेशम्। १२।
भूर्भुवः सुवः सुप्रजाः प्रजया भूयासं सुवीरो वीरैः सुवर्चा

I, 5, 8 °नुपयते E °नुनयते D
I, 5, 10 सवित्रा D। बृहस्पते ब्र° E
I, 5, 11 वाचं E

वर्चसा सुपोषः पोषैः सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः॥ इत्येनमभिमन्त्र्य। भूरृक्षु त्वाग्नौ पृथिव्यां वाचि ब्रह्मणि ददेसौ। भुवो यजुःषु त्वा वायावन्तरिक्षे प्राणे ब्रह्मणि ददेसौ। सुवः सामसु त्वा सूर्ये दिवि चक्षुषि ब्रह्मणि ददेसौ॥ इष्टस्ते मियोसान्यसावनलस्य ते प्रियोसान्यसौ॥ इदं वत्स्यावः प्राण आयुषि वत्स्यावः प्राण आयुषि वसासौ॥ इति च। १३।

अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति।

अग्निरायुष्मान्। इति पञ्चभिः पर्यायैः। १४।

आयुष्टे विश्वतो दधत्॥ इति। १५। ॥ ५ ॥

---

दक्षिणे कर्णे जपति। १।

आयुर्दा अग्ने॥ इत्युत्तरे। २।

असौ पृथिव्यां प्रतितिष्ठ वायावन्तरिक्षे सूर्ये दिवि॥ यां स्वस्तिमग्निर्वायुरादित्यश्चन्द्रमा आपोनुसंचरन्ति तां स्वस्तिमनुसंचरासौ॥ प्राणस्य ब्रह्मचार्यभूरसौ॥ इत्युभयत्रानुषजति। ३।

मेधां त इन्द्रो ददातु मेधां देवी सरस्वती।
मेधां ते अश्विनावुभावाधत्तां पुष्करस्रजौ॥

---

I 5 13 E om असौ after ददे the first two times । °यनऌस्य C D perhaps °यनलमस्ते to be read

I 5 14 T S 2 3 10 3

I 5 15 T S 1, 3 11 1

I 6 2 °र्दाग्न F । T S 1 3 14 1 । G om the pratika of this sutra

I 6 1 °अश्विनावभा° D

इति तस्य मुखेन मुखं संनिधाय जपति । ४ ।

अथैनं परिददाति । कपकाय त्वा परिददाम्यन्तकाय त्वा परिददाम्यघोराय त्वा परिददामि गदाय त्वा परिददामि यमाय त्वा परिददामि मखाय त्वा परिददामि वशिन्यै त्वा परिददामि पृथिव्यै त्वा सवैश्वानरायै परिददाम्यद्भ्यस्त्वा परिददाम्योषधीभ्यस्त्वा परिददामि वनस्पतिभ्यस्त्वा परिददामि द्यावापृथिवीभ्यां त्वा परिददामि सुभूताय त्वा परिददामि ब्रह्मवर्चसाय त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददामि सर्वाभ्यस्त्वा देवताभ्यः परिददामि ॥ इति । ५ ।

अत्र सावित्रीं वाचयति यदि पुरस्तादुपेतो भवति । ६ ।

यद्यनुपेतस्त्र्यहे पर्यवेते । ७ ।

सद्यः पुष्करसादिः । ८ ।

अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्प्राङ्मुख उपविशति। राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् ॥ इति । ९ ।

आदित्यायाञ्जलिं कृत्वाचार्यायोपसंगृह्य दक्षिणतः कुमार उपविश्य । अधीहि भो । इत्युक्त्वाथाह । सावित्रीं भो अनुब्रूहि ॥ इति । १० ।

गणानां त्वा गणपतिं हवामहे ॥ इत्येनमभिमन्त्र्याथास्मै पच्छोऽर्धर्चशोऽन्वाहाथार्धर्चशोथ संततम् ।

---

I, 6, 5 कपकाय F B begins a new sutra with कपकाय । गदाय त्वा प॰ comes after यमाय त्वा प॰ in E

I, 6, 6 यदि is cancelled in C. B begins there a new sutra

I, 6, 8 पौष्करसादिः all MSS, but see the comm

I, 6, 9 D has only the pratika of this sutra

I 6, 11 T S 2, 3, 14, 3

भूस्तत्सवितुर्वरेण्यम् ।
भुवो भर्गो देवस्य धीमहि ।
सुवर्धियो यो नः प्रचोदयात् ॥
भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
सुवर्धियो यो नः प्रचोदयात् ॥
भूर्भुवः सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो
नः प्रचोदयात् । इति । ११ । ॥ ६ ॥

अथ सप्त पालाशीः समिध आर्द्रा अप्रच्छिन्नाग्राः प्रादेश-
मात्रीर्घृतान्वक्ता आभ्याधापयति । १ ।
अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा
समिध्यस एवं मां मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्म-
वर्चसेनान्नाद्येन समेधय स्वाहा ॥ इत्येकाम् । २ ।
अग्नये समिधौ ॥ इति द्वे । ३ ।
अग्नये समिधः ॥ इति चतस्रः । ४ ।
अथ परिषिञ्चति यथा पुरस्तात् । ५ ।
अन्वमंस्थाः ॥ प्रासावीः ॥ इति मन्त्रान्तान्संनमति । ६ ।
अथ देवता उपतिष्ठते । ७ ।
अग्ने व्रतपते व्रतं चरिष्यामि ॥ इत्यग्निम् । वायो व्रतपते ॥

---

I, 6, 11 F om भूस्तत्सवितु° °इति ।
I 7, 1 °न्नाग्रभ्याधा° F.
I, 7 2 °महार्षं D °माहर्षं F । F om प्रजया ।
I 7, 5 B begins a new sutra with यथा । See above I 2, 7
I 7, 6 See above I 2 8—10

इति वायुम् । आदित्य व्रतपते ॥ इत्यादित्यम् । व्रतानां व्रतपते ॥ इति व्रतपतिम् । ८ ।

अत्र गुरवे वरं ददाति । ९ ।

उद्दीयुषा ॥ इत्युत्थाप्य । सूर्यैष ते पुत्रस्तं ते परिददामि ॥ इति परिदाय ।

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतं जीवेम शरदः शतम् ।
नन्दाम शरदः शतं मोदाम शरदः शतम् ।
भवाम शरदः शतं शृणवाम शरदः शतम् ।
प्रब्रवाम शरदः शतमजिताः स्याम शरदः शतम् ।
ज्योक् च सूर्यं दृशे ॥ इत्यादित्यमुपतिष्ठते । १० ।

अग्निष्ट आयुः प्रतरां कृणोत्वग्निष्टे पुष्टिं प्रतरां दधातु ।
इन्द्रो मरुद्भिरिह ते दधात्वादित्यस्ते वसुभिरादधातु ॥
इति दण्डं प्रदायाभयं प्रयच्छति । ११ ।

अथाह । भिक्षाचर्यं चर ॥ इति । १२ ।

स मातरमेवाग्रे भिक्षेत । १३ ।

अतोऽन्येषु ज्ञातिकुलेषु । १४ ।

आहृत्य । भैक्षम् ॥ इति गुरवे प्राह । १५ ।

तत्सुभैक्षम् ॥ इत्युक्त्वा । १६ ।

यस्य ते प्रथमवास्यं हरामस्तं त्वा विश्वे अवन्तु देवाः ।

---

I 7, 10 T S 1 2 8 । ᳚मजीता स्याम F

I 7, 11 ददातु E instead of दधातु ।

I, 7, 15 E om आहृ॰ ᳚रवे । C D om गुरवे । गुरव is cancelled in F । भैक्षम A C D s m F । G om this sutra

I 7 16 तत्सुभैक्षम C D 1 । C has this sutra in the margin

तं त्वा भ्रातरः सुहृदो वर्धमानमनुजायन्तां बहवः सुजातम् ॥
इति प्रथमवास्यमस्यादद्ते । १७ ।
उपस्थितेन ओदनस्यापूपानां सक्तूनामिति समवदाय
सर्पिर्मिश्रस्य जुहोति । अग्नये स्वाहा ॥ सोमाय स्वाहा ॥
अग्नयेन्नादाय स्वाहा ॥ अग्नयेन्नपतये स्वाहा ॥ प्रजा-
पतये स्वाहा ॥ विश्वेभ्यो देवेभ्यः स्वाहा ॥ सर्वाभ्यो
देवताभ्यः स्वाहा ॥ अग्नये स्विष्टकृते स्वाहा ॥ इति । १८ ।
सर्वत्रैवमनादिष्टदेवते । १९ ।
अमुष्मै स्वाहा ॥ इति यथादेवतमादिष्टदेवते । २० ।
एतेषामेवान्नानां समवदाय प्रागग्रेषु दर्भेषु बलिं करोति ।
वास्तुपतये स्वाहा ॥ इति । २१ ।
निवृत्तान्नेन ब्राह्मणान्परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति
वाचयित्वा । २२ । ॥ ७ ॥

---

त्र्यहव्रतं चरति । १ ।
अक्षारलवणमशमीधान्यं भुञ्जानोधःशाय्यमृन्मयपाय्यशू-
द्रोच्छिष्टमधुमांसाग्र्यदिवास्वाप्नुभौ कालौ । भिक्षा-
चर्यमुदकुम्भमित्याहरन्नहरहः काष्ठकलापमुभौ कालौ
सायं सायं वा समिधोभ्यादधाति । २ ।

---

I 7 18 D begins a new sutra with अग्नये स्वाहा ।
I 7 20 यथादिष्टदेवत D
I 7 21 E ins सर्पिर्मिश्रस्य जुहोति after समवदाय । वस्तुप° E
I 8 2 °मन्नार° F । °क्लिष्टमधु F C p m । °न्याहरन्हरहः D p
F om इति । °कमाप्नुभा E

पुरस्तात्परिषेचनात् । यथा ह तद्वसवो गौर्यम् ॥ इति प्रद-
  क्षिणमग्निं परिमृज्य परिषिञ्चति यथा पुरस्तात् । ३ ।
व्याहृतिभिः समिधोऽभ्यादधात्येकैकशः समस्ताभिश्च ।
एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व ।
वर्धिषीमहि च वयमा च प्यासिषीमहि । स्वाहा ॥
मेधां म इन्द्रो ददातु मेधां देवी सरस्वती ।
मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ । स्वाहा ॥
अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः ।
दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषताम् । स्वाहा ॥
आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या ।
ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुष-
  ताम् । स्वाहा ॥ इति । ४ ।
तथैव परिमृज्य परिषिञ्चति यथा पुरस्तात् । ५ ।
यत्ते अग्ने तेजस्तेनाहम् ॥ इत्येतैर्मन्त्रैरुपतिष्ठते । मयि मेधां
  मयि प्रजाम् ॥ इति च । ६ ।
त्र्यहे पर्यवेते तथैव त्रिवृतान्नेन ब्राह्मणान्परिविष्य पुण्याहं
  स्वस्त्ययनमृद्धिमिति वाचयित्वा व्रतं विसृजते । अग्ने
  व्रतपते व्रतमचारिषम् ॥ इत्येतैः संनतैः । ७ ।
एतद्व्रत एवात ऊर्ध्वम् । ८ ।

---

I, 8, 3 T S 1 7 1) 7 ; See I 2 7—10
I 8 4 व्यहृतिभि F s m ; °धयत्ता F ; Read देवी with T A 10
11 ; म मा A ; उर्ज° C ऊर्ज° D ; जुषन्ताम C D E
I 8 6 तेज इत्येतैर्म° D तेज इत्येतैरुपति° C E ; T A 4 12 2 13
I 8 7 पुण्यां स्व° F ; D om संनतै ; See above I 7 8
I, 8 8 एवा ऊ° E

आचार्यकुलवास्यश्नाति क्षारं लवणं शमीधान्यमिति । ९ ।
दण्डी जटी मेखली । १० ।
शिखाजटो वा स्यात् । ११ ।
काषायमजिनं वा वस्त्रे । १२ ।
न स्त्रियमुपैति । १३ ।
अष्टाचत्वारिंशद्वर्षाणि चतुर्विंशतिं द्वादश यावद्ग्रहणं वा
। १४ ।
न त्वेवाव्रतः स्यात् । १५ ।
काण्डोपाकरणे काण्डविसर्गे च ।
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् । स्वाहा ॥
इति काण्डर्षिर्द्वितीयः । इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोत्यरीरिचम् ॥ इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । १६ ॥ ८ ॥

द्वितीयः पटलः

---

अधीत्य वेदं स्नानम् । १ ।
तद्व्याख्यास्यामः । २ ।
उदगयन आपूर्यमाणपक्षे रोहिण्यां मृगशिरसि तिष्य उत्तरयोः फल्गुन्योर्हस्ते चित्रायां विशाखयोर्वैतेषु स्नायात् ।३।

---

I 8 9 °स्यश्नाति D
I 8 11 °यतिर्द्वादश D
I 8, 16 ¹ om काण्ड° °र्गे च । °र्षिर्द्वितीय F ; See above I 3 8
I, 9 2 संख्या° E

यत्रापस्तद्गत्वाग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा पालाशीं
समिधमादधाति ।
इमं स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ।
स्वाहा । इति। ४ ।
अथ व्याहृतिभिर्जुहोति यथा पुरस्तात् । ५ ।
त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ।
यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् । स्वाहा । ६ ।
इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥
त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोत्यरीरिचम् ॥
इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति
यथा पुरस्तात् । ७ ।
ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वा-
चयित्वा व्रतं विसृजते । अग्ने व्रतपते व्रतमचारिषम् ॥
इत्येतैः । ८ ।
व्रतं विसृज्य । उदु त्यम् ॥ चित्रम् ॥ इति द्वाभ्यामादित्यमु-
पतिष्ठते । ९ ।
उदुत्तमं वरुण पाशमस्मत् ॥ इत्युत्तरीयं ब्रह्मचारिवासो नि-
धायान्यत्परिधाय । अवाधमम् ॥ इत्यन्तरीयम् । वि

I, 9, 4 स्तोमर्हते D । प्रमतिरसि D । संसद्ये C E
I, 9, 5 See above I, 3, 4
I, 9, 7 See I, 3, 8
I, 9, 8 See I, 8, 7.
I, 9, 9 उदु त्यम् T । T S 1, 4, 43, 1
I, 9, 10 T S 1, 5, 11, 3 । °चारिवासो D E C om.

मध्यमम् ॥ इति मेखलाम् । अथा वयमादित्य व्रते ॥ इति दण्डम् । मेखलां दण्डं कृष्णाजिनं चाप्सु प्रवेश्या-परेणाग्निं प्राङ्मुख उपविश्य क्षुरं संमृशति । क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिंसीः ॥ इति । १० ।

वप्त्रे प्रदायोन्दनीया अपोभिमृशति । शिवा नो भवथ संस्पृशे ॥ इति । ११ ।

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे ॥ इति दक्षिणं गोदानमुनत्ति । १२ ।

ओषधे त्रायस्वैनम् ॥ इत्यूर्ध्वाग्रामोषधिमन्तर्दधाति । १३ ।

स्वधिते मैनं हिंसीः ॥ इति क्षुरेणाभिनिदधाति । १४ ।

देवश्रूरेतानि प्रवपे ॥ इति प्रवपति । १५ ।

यत्क्षुरेण मर्चयता सुपेशसा वप्त्रवपसि केशश्मश्रु ।
वर्चया मुखं मा न आयुः प्रमोषीः ॥
इति वप्तारं समीक्षते । १६ ।

श्मश्रूण्यग्रे वापयतेथोपपक्षावथ केशानथ लोमान्यथ नखानि । १७ ।

पानडुहे शकृत्पिण्डे संयम्य केशश्मश्रुलोमनखानि । इदम-
हममुष्यामुष्यायणस्य पाप्मानमवगूहामि ॥ इति गोष्ठ
उदुम्बरे दर्भस्तम्बे वा निखनन्ति योऽस्य रातिर्भवति । १८ ।
ज्ञायनीयेनोत्साद्यौदुम्बरेण दन्तान्प्रक्षालयते । १९ । ॥ ९ ॥

---

अन्नाद्याय व्यूहध्वं दीर्घायुत्वाय व्यूहध्वं ब्रह्मवर्चसाय व्यूहध्वं
दीर्घायुरहमन्नादो ब्रह्मवर्चसी भूयासम् ॥ इति । १ ।
अथोष्णशीताभिरद्भिः स्नापयति । आपो हि ष्ठा मयोभुवः ॥
इति तिसृभिः । हिरण्यवर्णाः शुचयः पावकाः ॥ इति
चतसृभिः। पवमानः सुवर्जनः॥ इति चैतेनानुवाकेन। २।
गोष्ठे वावच्छाद्य संपरिश्रित्य पुरोदयमादित्यस्य प्रविशति ।
अत्र सर्वं क्रियते ॥ नैनमेतदहरादित्योऽभितपतीत्येके-
षाम् । स्नातानां वा एष तेजसा तपति य एष तपति
तस्मात्स्नातकस्य मुखं रेफायतीव । ३ ।
आहरन्त्यस्मै सर्वसुरभि चन्दनं वा पिष्टम् । तदभ्युक्ष्य । नमो
ग्रहाय चाभिग्रहाय च नमः शाकजञ्जभाभ्यां नमस्ताभ्यो
देवताभ्यो या अभियाहिणीः ॥ इति देवेभ्यः प्राचीन-
मञ्जलिं कृत्वा तेनानुलिम्पते ।
अप्सरासु च यो गन्धो गन्धर्वेषु च यद्यशः ।
दैव्यो यो मानुषो गन्धः स मामाविशतादिह ॥ इति । ४ ।

I 10 2 T S 4 1 5 1 । चतसृभि D instead of तिसृभि । T S 5 6 1 ; T B 1 4 8

I 10 3 वावच्छाद्य C ; E om इति । According to the comm we ought to read स्नातान्ना या एष न तपति । रफायतिव F

I 10 4 चाभियाहाय E ; A D E C s m om च before या गन्धा ।

आहरन्त्यसा अहते वाससी । ते अभ्युक्ष्य ।
सोमस्य तनूरसि तनुवं मे पाहि ।
स्वा मा तनूराविश शिवा मा तनूराविश ॥
इत्यन्तरीयं वासः परिधायाप उपस्पृश्य तथैवोत्तरीयमपरे-
णाग्निं प्राङ्मुख उपविशति । ५ ।
आहरन्त्यसै कुण्डले चान्दनमणिं बादरं वा सुवर्णाभिच्छाद-
नम् । तदुभय दर्भेण प्रबध्योपर्यग्नौ धारयन्नभिजुहोति ।
आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् ।
इदं हिरण्यमायुषे वर्चसे जैत्र्यायाविशतां माम् । स्वाहा ॥
उच्चैर्वाजि पृतनासाहं सभासाहं धनंजयम् ।
सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन्समाभृताः । स्वाहा ॥
शुनमहं हिरण्यस्य पितुरिव नामाग्रभिषम् ।
तं मा हिरण्यवर्चसं करोतु पूरुषु प्रियम् ।
ब्रह्मवर्चसिनं मा करोतु स्वाहा ॥
प्रियं मा कुरु देवेषु प्रियं मा ब्रह्मणि कुरु ।
प्रिय विश्येषु शूद्रेषु प्रिय मा कुरु राजसु । स्वाहा ॥
इयमोषधे त्रायमाणा सहमाना सहस्वती ।
सा मा हिरण्यवर्चसं करोतु पूरुषु प्रियम् ।
ब्रह्मवर्चसिनं मा करोतु स्वाहा ॥ इति । ६ ।

---

I 10 ५ °मन्तरेणाग्नि F

I 10 ६ °भिछाद F । प्रबध्या D । °यन्नुहोति D । B begins a new sūtra with आयुष्य । °मौद्भिद इदं Bhar II 21 । जैत्राया° D F C s m Bhar II 21 । विशतान्माम् A । नामायभियम Bhar II 21 । Read तन्मा हिरण्य° । पुरुषु C F पुरुषप्रि° F Bhar II 21 । ब्रह्मण कुरु F ब्रह्मण्यकुरु D C [illegible] I [illegible] इयमोषधे according to [illegible] I 13 [illegible] M II 7 [illegible] Bhar II 21 [illegible] त्रायधे । सहस्वति F । पुरुषु C F ।

एतैरेव पञ्चभिरस्वाहाकारैस्त्रिः प्रदक्षिणमुदपात्रेनुपरिश्राव्य
। ७ ।॥ १० ॥

विराजं च स्वराजं चाभिष्टीर्या च नो गृहे ।
लक्ष्मी राष्ट्रस्य या मुखे तया मा ससृजामसि ॥
इति कुण्डले प्रतिहरते दक्षिणे कर्णे दक्षिणं सव्ये सव्यम् ।१।
ऋतुभिष्ट्वार्तवैरायुषे वर्चसे ।
संवत्सरस्य धायसा तेन सन्ननुगृह्णासि ॥
इति कुण्डले संगृह्णीते । २ ।
इयमोषधे त्रायमाणा सहमाना सहस्वती ।
सा मा हिरण्यवर्चसं करोतु पूरुषु प्रियम् ॥
ब्रह्मवर्चसिनं मा करोत्वपाशोसि ॥ इति ग्रीवायां मणिं प्रति-
मुञ्चते । ३ ।
शुभिके शुभमारोह शोभयन्ती मुखं मम ।
मुखं च मम शोभय भूयांसं च भगं कुरु ॥
यामाहरज्जमदग्निः श्रद्धायै कामायास्यै ।
इमां तां प्रतिमुञ्चेहं भगेन सह वर्चसा ॥
इति द्वाभ्यां स्रजं प्रतिमुञ्चते । ४ ।

---

I 10 7 °भिर्मन्त्रैस्वाहाकारैस्त्रिर्° F । °पात्रेणापरि° A F C p n पात्रे णापरि° D

I 11 1 तया मा all MSS

I 11 2 Read with Ath V V 28 13 तेन ममृनु क्यामसि therewith we make (them) touch our years

I 11 3 Read त्रायमाणा as above I 10 6 । म F । पुरुषु C F पुरुषपि E

I 11 4 शाभमा° A । Bhar II 22 a 1 Āp M II 8 10 कामायान्यै । कामायास्यै may perhaps stand for कामायायास्यै (अयास्यै dative of *अयासि) । इमा त प्रति° A । D om the whole sutra

यदाञ्जनं त्रैककुदं जातं हिमवत उपरि।
तेन वामाञ्जेऽहं भगेन सह वर्चसा। मयि पर्वतपूरुषम्॥
इति त्रैककुदेनाञ्जनेनाङ्क्ते तस्मिन्नविद्यमाने येनैव केनचित्। ५।
यन्मे मनः परागतम्॥ इत्यादर्शेऽवेक्षते। ६।
देवस्य त्वा॥ इति वैणवं दण्डं प्रतिगृह्य। इन्द्रस्य वज्रोऽस्यश्विनौ मा पातम्॥ इति त्रिरूर्ध्वमुन्मार्ष्टि। ७।
येन वेजयासहूयतस्तस्करान्सरीसृपाञ्छ्वापदान्रक्षांसि पिशाचान्पौरुषेयाद्भयान्नो दण्ड रक्ष विश्वसाद्भयादश्च सर्वतो जहि तस्करान्॥
अनमः सर्ववृक्षेषु जायसे त्वं सपत्नहा।
जहि शत्रुगणान्सर्वान्समन्तं मघवानिव॥
इति त्रिः प्रदक्षिणमुपर्युपरि शिरः प्रतिहरते। ८।
प्रतिष्ठे स्थो देवते मा मा संताप्तम्॥ इत्युपानहावध्यवरोहति। ९।
प्रजापतेः शरणमसि ब्रह्मणश्छदिः॥ इति छत्त्रं प्रतिगृह्णाति। १०।

---

I 11, 5 उपरि A C D E F Bhar II, 22 Ap M II, 8 11 °पर्वतस्य H which according to Ath V IV 9 9 might be corrected to °पर्वतस्परि। भगेन F । It appears from Ap M II 9 1 that मयि पर्वत° is only the beginning of a longer mantra

I 11 6 T S 6 1 7, 2

I 11, 7 T S 7 1 11

I 11, 8 त्रिमया° F । °श्वपादा° A °श्वापदा° E F °श्वापदा° C धर्नाम्न C । न भान D

I 11, 10 प्रजापते°श्छदि F

यो मे दण्डः परापतद्विहायसोऽधि भूम्याम् ।
इमं तं पुनरादद आयुषे च बलाय च ॥
इति दण्डं पुनरादत्ते यद्यस्य हस्तात्पतति । ११ । ॥ ११ ॥

तृतीयः पटलः

---

आनयन्त्यस्मै रथमश्वं हस्तिनं वा । १ ।
रथंतरमसि वामदेव्यमसि बृहदसि ॥
अङ्कौ न्यङ्कावभितः ॥ इत्येषा ।
अयं वामश्विना रथो मा दुःखे मा सुखे रिषत् ।
अरिष्टः स्वस्ति गच्छतु विविघ्नन्नभिदासतः ॥
इह धृतिरिह विधृतिरिह रम इह रमताम् ॥ इति रथमातिष्ठते यदि रथेन प्रविशति । २ ।
अश्वोसि हयोसि मयोसि ॥ इत्येकादशभिरश्वनामभिरश्वं यद्यश्वेन । ३ ।
इन्द्रस्य त्वा वज्रेणाभ्युपविशामि वह कालं वह श्रियं माभिवह हस्त्यसि हस्तियशसमसि हस्तिवर्चसमसि हस्तियशसिहस्तिवर्चसी भूयासम् ॥ इति हस्तिनं यदि तेन । ४ ।

---

I 11 11 Par II, 2 12 reads समहं पुनरादद and it is possible that आददेयम is a corruption of आददेहम ।

I 12 2 Γ S I 7 7, 2 ; D om the whole sutra

I 12 3 See I S 7, 1 12 Ap M-II 21 20—30 and \ S 22 13 where however the third name is श्रम see the comm

I 12 4 इन्द्र स्या E ; काल यह D E ; E ins हस्ति after हस्त्यसि ; E om हस्तियशसिहस्तिवर्चसी । G om this sutra

तद्गच्छति यत्रास्या अपचितिं करिष्यन्तो भवन्ति । ५ ।

संस्रवन्तु दिशो मयि समागच्छन्तु सूनृताः ।
सर्वे कामा अभियन्तु नः प्रिया अभिस्रवन्तु नः प्रियाः ॥
इति दिश उपतिष्ठते । ६ ।

यशोसि यशोहं त्वयि भूयासम् ॥ इति योस्यापचितिं करिष्यन्भवति तमभ्यागच्छन्समीक्षते । ७ ।

अथास्या आवसथं कल्पयित्वा । अर्घः ॥ इति प्राह । ८ ।

कुरुत ॥ इति प्रत्याह । ९ ।

कुर्वन्त्यस्मै त्रिवृतं पाङ्क्तं वा । १० ।

दधि मधु घृतमिति त्रिवृत् । ११ ।

दधि मधु घृतमापः सक्तव इति पाङ्क्तः । १२ ।

कंसे दध्यानीय मध्वानयति । १३ ।

ह्रसीयस्यानीय वर्षीयसापिधायानूचीनानि पृथगादापयति कूर्चं पाद्यमर्घ्यमाचमनीयं मधुपर्क इति । १४ ।

अन्वहनुसंवृजिना सोनुपकिंचया वाचैकैकं प्राह । १५ ।

---

I 12 5 आपचिति F । G om this sutra

I 12 6 C puts ॥ after the first and second न ।

I 12 7 यास्या अप D Possibly the original reading was यास्या च ।

I 12 8 D ins त्रि after इति ।

I 12 9 कुरुत A

I 12 10 पाङ्कं C पाक्त F पाङ्क्त F । G joins this sutra with the two following

I 12 12 पाङ्क F पाङ्क्त C D

I 12 14 वर्षियसा० D । B begins a new sutra with कूर्चं । मधुपर्कमधु ।

I 12 15 अन्वहनु D अन्वहनु A F । Regarding अनुसंवृजिना see the c[illegible]

कूर्चः ॥ इति कूर्चम् । १६ ।
तस्मिन्प्राङ्मुख उपविशति । राष्ट्रभृदस्याचार्यासन्दी मा
त्वद्योषम् ॥ इति । १७ ।
अथास्मै । पाद्यम् ॥ इति प्राह । १८ ।
तेनास्य शूद्रः शूद्रा वा पादौ प्रक्षालयति सव्यमग्रे ब्राह्मणस्य
दक्षिणमितरयोः । १९ । ॥ १२ ॥

---

विराजो दोहोसि ॥ मयि दोहः पद्यायै विराजः ॥ इति योस्य
पादौ प्रक्षालयति तस्य हस्तावभिमृश्यात्मानं प्रत्यभि-
मृशति । मयि तेज इन्द्रियं वीर्यमायुः कीर्तिर्वर्चो
यशो बलम् ॥ इति । १ ।
अथास्मै । अर्घ्यम् ॥ इति प्राह । २ ।
तत्प्रतिगृह्णाति । आ मागन्यशसा संसृज तेजसा वर्चसा
पयसा च ।
तं मा कुरु प्रियं प्रजानामधिपतिं पशूनाम् ॥ इति । ३ ।
समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपिगच्छत ।
अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः ॥
इति शेषं निनीयमानमनुमन्त्रयते । ४ ।
अथास्मै । आचमनीयम् ॥ इति प्राह । ५ ।

---

I 12 16 G om this sutra
I 12 17 °भृत्संस्या° D F
I 12 19 ब्रह्मणस्य F
I 13 1 B begins a new sutra with मयि तेज । °मर्शति F [illegible]
I 13 3 D joins the mantra with the following sutra । °य प्रजा
नामधि° A

अमृतोपस्तरणमसि ॥ इत्यप आचामति । ६ ।
अथास्मै । मधुपर्कः ॥ इति प्राह । ७ ।
तं सावित्रेणोभाभ्यां हस्ताभ्यां प्रतिगृह्य । पृथिव्यास्त्वा नाभौ
सादयामीडायाः पदे ॥ इति पृथिव्यां प्रतिष्ठाप्य ।
यन्मधुनो मधव्यं परममन्नाद्यं रूपम् ।
तेनाहं मधुनो मधव्येन परमेण रूपेण परमो मधव्योन्नादो
भूयासम् ॥ इत्यङ्गुष्ठेनोपमध्यमया चाङ्गुल्या त्रिः प्रद-
क्षिणं संयुज्य । तेजसे त्वा श्रियै यशसे बलायान्नाद्याय
प्राश्नामि ॥ इति त्रिः प्राश्य योस्य रातिर्भवति तस्मा
उच्छिष्टं प्रयच्छति । ८ ।
सर्वं वा प्राश्य । अमृतापिधानमसि ॥ इत्यप आचामति । ९ ।
अथास्मै । गौः ॥ इति प्राह । १० ।
तस्याः कर्मोत्सर्गो वा । ११ ।
गौर्धेनुर्भव्या
माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य
नाभिः ।
प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥
पिबतूदकं तृणान्यत्तु ॥ ओमुत्सृजत ॥ इत्युत्सर्गे संशास्ति । १२ ।

---

I 13, 6 इत्यपाचामति E

I 13 5 सवित्रेणो॰ F The Savitra Yajus stands I 6 7, 1 11 1 1 ॰डाया पदे D । परमवाद्य F । रूपे प॰ F

I 13 9 अमृतापिनम॰ D

I 13, 11 तस्या क॰ F । The context seems to read ॰त्सर्गो वा ।

I 13 12 गौर्धेनुर्भव्या all MSS Baudh I, 1 and Bhar II 2) । तृणान्यत्तु F

गौरस्यपहतमाप्पाय पाप्मानं जहि मम चामुष्य च हतं मे
    द्विषन्तं हतो मे द्विषन् । कुरुत ॥ इति क्रियमाणा-
    याम् । १३ ।
उत्सर्गेन्येन मांसेनान्नं संस्कृत्याथास्मै । भूतम् ॥ इति प्राह । १४ ।
तत्सुभूतं विराडन्नं तन्मा क्षायि तन्मेशीय तन्म ऊर्जं धास्त-
    त्सुभूतम् ॥ इत्युक्त्वाथाह । ब्राह्मणान्भोजयत ॥ इति । १५ ।
तेष्वस्मै भुक्तवत्स्वनुसंवृजिनमन्नमाहारयति । १६ ।
तत्प्रतिगृह्णाति । द्यौस्त्वे ददातु पृथिवी प्रतिगृह्णातु पृथिवी
    ते ददातु प्राणः प्रतिगृह्णातु प्राणस्त्वाश्नातु प्राणः
    पिबतु ॥ इति । १७ ।
इन्द्राणी मे वर्चः कृणुताम् ॥ इति यावत्कामं प्राश्य योस्य
    रातिर्भवति तस्मा उच्छिष्टं प्रयच्छति । १८ ।
यं कामयेत न विच्छिद्येतेति ।
यस्मिन्भूतं च भव्यं च सर्वे लोका इह श्रिताः ।
तेन त्वाहं प्रतिगृह्णामि त्वामहं ब्रह्मणा त्वा महां प्रतिगृह्णा-
    म्यसौ ॥ इत्याचम्य । १९ । ॥ १३ ॥

---

I, 13 13 °ष्य च हत मे C । द्विषत F । हत stands for हत compare *Man I, 9 हतो मे पाप्मा पाप्मान मे हतो कुर्तेति and Bhar II, 21 अदि द्वि-*
षन्त ब्रह्मोममद्विष कुर्तेति [?] ।

I, 13, 14 G om this sutra with the comm

I, 13, 15 क्षायी E । चायिनन्मे° C D । तन्मेशीयत तन्म C D

I 13, 17 °स्त्याश्नातु E । F om इति ।

I, 13, 18 F adds *वर्चः सोमो बृहस्पति* वर्चो मे विश्वे देवा वर्चो मे
धत्तमश्विना before इति ।

I, 13 19 Before य E ins सर्वे वा प्राश्य । °भवे न वि° F नाथकि° D
°मयेता न C p m । सर्वे कामा D । परिगृ° F । ब्राह्मणा F । त्वामह प्र° C
त्वामहं ब्रह्मणा° I मह्य ब्रह्मणा° F

भुक्तवतो दक्षिणं हस्तं गृह्णीयात् । १ ।
यममात्यमन्तेवासिनं प्रेष्यं वा कामयेत ध्रुवो मेनपायी स्यादिति स पूर्वाह्णे स्नातः प्रयतवस्त्रोऽहःक्षान्तो ब्राह्मणसंभाषी निशायां तस्यावसथं गत्वा जीवशृङ्गे प्रस्राव्य चिः प्रदक्षिणमावसथं परिषिञ्चन्परिक्रामेत् ।
परि त्वा गिरेरिह परि भ्रातुः परि ष्वसुः ।
परि सर्वेभ्यो ज्ञातिभ्यः परिषीदः क्षेष्यसि ॥
शश्वत्परिकुपिलेन संक्रामेणाविच्छिदा ।
ऊलेन परिमीढोसि परिमीढोस्यूलेन ॥ इति । २ ।
अनिगुप्ते जीवशृङ्गं निदधाति । ३ ।
यस्मा अमात्या अन्तेवासिनः प्रेष्या वोद्विजेयुस्तान्परिक्रोशेत् ।
अनुपोह्वदनुपह्वयेन्निवर्तो यो न्यवीवृधः ।
ऐन्द्रो वः परिक्रोशः परिक्रोशतु सर्वदा ॥
यदिति मामतिमन्यध्वं मायादेवा अवतरन् ।
इन्द्रः पाशेन वः सित्का मह्यं पुनरुदाजतु ॥ इति । ४ ।

---

I 14 2 °यासिन प्रे° C । कामयते F । B begins new sutras with स पूर्वाह्णे and जीवशृङ्गे । परिषञ्च° D । प्रदक्षिणमव° F । गिरेरहमिद ACFF Bhar II, 27 । D om परि भ्रातु ° °इति । परिषीदमा क्षे° Bhar II 27 परिषीद is possibly a corruption of परिषित Ap M II, 22 5 has परिषीत । क्षेष्यति A क्षेष्यसि Ap, read क्षेष्यसि compare Par III 7, 2 क्व गमिष्यसि । शश्वत्व° F Ap reads °कुपितेन Bhar स्यपितेन । उलेन F and Ap but Bhar उलेन, which may be correct । A F om परिमीढोसि । परिमीढो° A

I, 14 1 °येषु म्नान्य° F । अनुपह्वद° F अनुपोह्वदनुह्वयो Ap M II 22, 9 °नुह्वयो Bhar II 27 । योन्य° C p m न्यवीवृधत Ap I c The mantra might be restored as follows अनु यो ह्वदनुह्वयो नियता यो निवर्तत । परिक्रोश F । यतिदिति F Delete ति with Ap M II 22 10 and Bhar II 27 । मामितिमन्यायध्व C s m F । °मन्याध्व C p m °मन्यध्व D । मायाया दे° D । अवतरम A अवतरं F F अवतर C D । पाशेन C F । Read सित्वा with Par III, 7, 3 । °रुदाजितु F

सोथ स्वागारं प्रविश्य सैध्रकीं समिधमाधाय । आ वर्तन वर्तय ॥ इत्याकर्षणेन जुहोति । ५ ।

अथातो दारगुप्तिम् । ६ ।

स्थूरा दृढा जारी चूर्णानि कारयित्वा सुप्तायै योनिमुपवपेत् । इन्द्राययास्य शेफमलीकमन्येभ्यः पुरुषेभ्योन्यत्र मत् ॥ इति । ७ ।

अथातः पण्यसिद्धिः । ८ ।

पण्यस्यायादाय जुहोति । ९ । ॥ १४ ॥

---

यद्वो देवाः प्रपणं चराम देवा धनेन धनमिच्छमानाः । तस्मिन्सोमो रुचमादधात्वग्निरिन्द्रो बृहस्पतिरीशानश्च । स्वाहा ॥ इति । १ ।

अथातः क्रोधविनयनम् । २ ।

या त एषा रराट्या तनूर्मन्योर्मृद्धस्य नाशिनी ।
तां देवा ब्रह्मचारिणो विनयन्तु सुमेधसः ॥
यत्त एतन्मुखे मतं रराटमुदिव विध्यसि ।

---

I, 14, 5. सोथ C D F ; B G om सोथ । T S 3, 3, 10, 1. । In E F is sûtra 5 the last of chapter 14.

I, 14, 6. दारगु॰ E

I, 14, 7 स्थूला F । स्थूरा C । दृढा रिक्ता चू॰ F । दृढाज्ञा॰ D । F ins जारी after चूर्णानि । गुप्तायै D । इन्द्राय यथा चास्य A Read इन्द्र आयास्य । शेफमलिक॰ C E F ॰थास्य फलीक॰ D । मात् D

I, 15, 1 यद्वो F । प्रपणं E प्रमणं F । ॰शानं च D । Âp M. II, 22, 4 instead of ईशानश्च puts in स्वाहा ।

I, 15, 2. ॰नयनं D

I, 15 3 रराट्या C p m । तनूमन्योम॰ F । ॰मृदयस्य E read ॰र्मृडस्य । मन्योः seems superfluous । D ins त्वा after तां । यत C ; m E F । मसं F । ॰टमुदय D । Read विध्यसि with Âp. M II, 22, 1.

अव ज्यामिव धन्विनो हृदो मन्युं तनोमि ते ॥
अहद्यौश्च पृथिवी च विधे क्रोधं नयामसि। गर्भमश्वतर्या इव।
इति क्रुद्धमभिमन्त्रयते । ३ ।
अथातः संवादाभिजयनम् । ४ ।
निशायामन्तरागारेग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा कौरोराज्यमिश्रैर्जुहोति ।
अवजिह्व निजिह्विकाव त्वा हविषा यजे ।
यथाहमुत्तरो वदाम्यधरो वदसौ वदा । स्वाहा ॥ इति । ५ ।
अथैनं संनिधावभिजपति ।
आ ते वाचमास्याददे मनस्यां हृदयादधि ।
अङ्गादङ्गात्ते वाचमाददे यत्र यत्र निहिता वाक्तां त आददे॥
रुद्र नीलशिखण्ड वीर कर्मणि कर्मणि । इमं मे प्रतिसंवादिनं वृक्षमिवाशनिना जहि ॥
अधो वदाधरो वदाधस्ताद्भूम्या वद ।
अधोप्रतिरिव कूटेन निजस्य निहितो मया ।

---

I 15 3 According to Ap M I ... and Ath V VI 42 1 we ought to read ज्यामिव धन्वना । Read एष्यो चाह according to पृथिवी चाह of Par III 13 ... । According to Ap M II, 22 2 वि ते क्रोध and Par III 13 ... ता त क्रोध one might correct वि ते क्रोध ।

I 15 4 °भिजनम D

I 15 ... निशित्यतकाय D । यथिपा F । यथहमु° F । वदासौ E । Read वदमा according to Ap M II 21 32 and वदात given by Blar II 2 (°म्यधरासौ वदात) ।

I 15 6 °मास्या द A D । दधे D The original reading was probably °माम्याददे । मनस्या हृ D मास्या हृद° F । °ता याचात्ता F । °शिख वीर F । A F o the first कर्मणि । °सपादिन D प्रतियादिन ... to be required ... tre । अधा D । वदा ... कूट to be read । निहता A D C ... Perhaps निर्जसि to be read

तत्सत्यं यदहं ब्रवीम्यधरो मत्पद्यस्वासौ ॥ इति । ६ ।
हिरण्यबाहुः सुभगा जिताक्ष्यलंकृता मध्ये ।
देवानामासीनार्थे मह्यमवोचत्स्वाहा ॥
इति सभामालभ्य जपति । ७ ।
मम परे ममापरे ममेयं पृथिवी मही ।
ममाग्निश्चेन्द्रश्च दिव्यमर्थमसाधयन्निव ॥
इति परिषदमभिवीक्षतेभ्येव जपति । ८ । ॥ १५ ॥

## चतुर्थः पटलः

दर्शे चन्द्रमसं दृष्ट्वाप आचम्यापो धारयमाणः । आ प्यायस्व ॥
सं ते ॥ नवो नवो भवति जायमानः ॥ यमादित्या
अंशुमाप्याययन्ति ॥ इति चतसृभिरुपतिष्ठते । १ ।
मयि दक्षक्रतू ॥ इति जञ्जभ्यमानो जपति । २ ।
सिगसि नसि वज्रो नमस्ते अस्तु मा मा हिंसीः ॥ इति
सिचाधिक्षिप्तो जपति ॥ ३ ॥
तस्य तन्तुमाच्छिद्य मुखवातेन प्रध्वंसयेत् । ४ ।
ये पक्षिणः पतयन्ति बिभ्यतो निर्ऋतैः सह ।

I 15, 6 ब्रवस्य॰ F । ॰स्यातिविति D
I 15 7 सुभागा जिताक्ष्य॰ F । ॰कृता C D । मह्यमेजा॰ D । ॰चत्सर्वेति C ॰वत्सभामा॰ D F । ॰मह्य D
I 15 8 अति D । ॰न्द्रस्य D । ॰वीक्षमभ्येव D
I 16, 1 [illegible] ॰प्याययन्ति F । ॰तिष्ठते F
I, 16 3 A F om ॰सि । A C I ins सि after वज्रो । सिचा F
I, 16 4 E ins मा after ॰च्छिद्य । प्रध्वंसयेत F
I 16 5 निर्ऋति सह F Possibly a corruption of निर्ऋते सदा

ते मा शिवेन शग्मेन तेजसोन्दन्तु वर्चसा ॥
इति वयसाधिक्षिप्तो जपति तदन्येन हस्ताग्रमृज्याद्भिः प्रक्षालयीत । ५ ।
दिवो नु मा बृहतो अन्तरिक्षादपां स्तोको अभ्यपतच्छिवाय।
समिन्द्रियेण मनसाहमागां ब्रह्मणा गुप्तः सुकृता कृतेन ॥
इति जपेद्यद्येनमविज्ञातोपां स्तोकोभिच्छादयेत् । ६ ।
यदि वृक्षाग्रादभ्यपतत्फलं यद्वान्तरिक्षात्तदु वायुरेव ।
यत्रा वृक्षस्तनुवै यत्र वास आपो बाधन्तां निर्ऋतिं पराचैः॥
इति जपेद्यद्येनमविज्ञातं फलमभिपतेत् । ७ ।
नमः पथिषदे वातेपवे रुद्राय नमो रुद्राय पथिषदे ॥ इति चतुष्पथमवक्रम्य जपति । ८ ।
नमः पशुषदे वातेपवे रुद्राय नमो रुद्राय पशुषदे ॥ इति शकृद्वतौ । ९ ।
नमः सर्पसदे वातेपवे रुद्राय नमो रुद्राय सर्पसदे ॥ इति सर्पसृप्ते । १० ।
नमोन्तरिक्षसदे वातेपवे रुद्राय नमो रुद्रायान्तरिक्षसदे ॥ इति जपेद्यद्येनं संवर्तवात आगच्छेत् । ११ ।

---

I 16, 5 ते म शि D तेन मे शिवेन F । वयसा° F । प्रक्षालयति F

I 16, 6 नु मा F । मागा F । °तत शिव F । समिद्रेण F । सुकृतेन F । कृतेति D । °द्यज्ञेनम° D । °भ्यातेत B which is found too, in the comm instead of °च्छादयेत ।

I 16, 7 यद्वृक्षा° C s n यद्येवृक्षा F । °पतत्यन F । °रिक्षात्तदु F । या पुरेया F । बाधन्ता D । °पेद्यज्ञेनम° C p n

I 16, 8 पथिषदे यदे वाते° D पथदे वातेपव F । रुद्रायान्तरिक्षसदे F । पथिषदे D

I 16, 9 F ins नमो रुद्राय after °पवे रुद्राय । शकृद्वतो F

I 16, 10 सर्पसते D सर्पसदे A C E F but see the comm । इति सर्पसते A C D E F

I 16, 11 °रिक्षपदे F । अपेयद्ये D

नमोप्सुषदे वातेषवे रुद्राय नमो रुद्रायाप्सुषदे ॥ इति नदी-
मुदन्वतीमवगाह्य जपति । १२ ।
नमस्तत्सदे वातेषवे रुद्राय नमो रुद्राय तत्सदे ॥ इति चित्रं
देशं देवयजनं वनस्पतिं वाक्रम्य जपति । १३ ।
सूर्याभ्युदितोहनि नाश्नीयाद्वाग्यतोहस्तिष्ठेत् । १४ ।
सूर्याभिनिमुक्तो रात्रावेवम् । १५ ।
न यूपमुपस्पृशेत् । यद्युपस्पृशेद्धुरिदं यज्ञस्य प्रतिमुञ्चीत । यद्ये-
कमुपस्पृशेत् । एष ते वायो ॥ इति ब्रूयाद्यदि द्वौ । एतौ
ते वायू ॥ इति यदि बहून् । एते ते वायवः ॥ इति । १६ ।
अनिहूतं परिहूतं परिष्ठुतं शकुने रुदितं च यत् ।
मृगस्य शृतमक्ष्णया तद्द्विषद्भ्यो भयामसि ॥
इत्यध्वानमभिप्रव्रजञ्जपति । १७ ।
उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि ।
स्वस्ति नः शकुने अस्तु शिवो नः सुमना भव ॥
इत्यनभिमतं शकुनं प्रतिजपति । १८ ।
यदेतद्भूतान्यन्वाविश्य दैवीं वाचं वदसि ।
द्विषतो नः परावद तान्मृत्यो मृत्यवे नय ॥

---

I, 16 12 °मुपगाह्य F

I 16, 13 नमत्सदे D । F om वातेषवे° °तत्सदे ।

I 16 14 नाश्नीयाद्वा° F

I 16 16 °मुञ्चीयद्यस्यमु° F °मुञ्चीयद्ये E

I 16 17 Probably अनुहूत (Baudh Grı Pravaśa 3 अनुहूत) । A om परिहूत read परिकूत with Baudh । Dele परिष्ठुत । शतम° A C E F probably सतम° (Baudh मृगम°) । D om तद । Read भजामसि (Baudh दशाम्यहम Bhar II 31 दिशाम्यहम) । °व्रजं जपति F

I 16, 18 सवनेषु E

I 16, 19 देवीं F । तन्म्° D । m तम° D s m

इत्येकसृकाम् । १९ ।

अथास्मा उभयत आदीप्तमुल्मुकं तां दिशं प्रति निरस्यति। अग्ने अग्निना संवदस्व मृत्यो मृत्युना संवदस्व ॥ इत्यप उपस्पृश्य । २० ।

अथैनमुपतिष्ठते । विभूरसि प्रवाहणः ॥ इत्येतेनानुवाकेन । २१ । ॥ १६ ॥

---

यदीपितो यदि वा स्वकामी भयेडको वदति वाचमेताम्। तामिन्द्राग्नी ब्रह्मणा संविदानौ शिवामस्मभ्यं कृणुतं गृहेषु॥ इति सलावृकीम् । १ ।

प्रसार्य सक्थ्यौ पतसि सव्यमक्षि निपेपि च ।
मेह कस्य चनाममत् ॥
इति शकुनिम् । २ ।

हिरण्यपक्षः शकुनिर्देवाना वसतिंगमः ।
याम प्रदक्षिणं कृत्वा स्वस्ति नो वद कौशिक ॥
इति पिङ्गलाम् । ३ ।

पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः ।
पुनर्ब्राह्मणमैतु मा पुनर्द्रविणमैतु मा ॥ इति

I 16 20 ता प्रति दिश प्रति F । In B D this sutra ends with [illegible] रस्यति । इत्युपस्पृश्य [illegible]

I 16 21 इत्यनेना [illegible]

I 17 1 [illegible] शिया ना शानि [illegible] F । मान्ना [illegible] ज्ञान [illegible]

I 17 2 मसार्य F । निपपि वा F । [illegible] । शकुनि D

I 17 3 पक्ष य D । शकुनिर्दे F । मर्तिगम D । पिंगला F

I 17 4 पुनर्मै F । माम ॥ D

अथैते धिष्णियासो अग्नयो यथास्थानं कल्पन्तामिहैव ।
स्वाहा ॥
पुनर्मे आत्मा पुनरायुरागात्पुनः प्राणः पुनराकूतमागात् ।
वैश्वानरो रश्मिभिर्वावृधानोन्तस्तिष्ठतु मे मनोमृतस्य केतुः ।
स्वाहा ॥
यदन्नमद्यते सायं न तत्प्रातरवति क्षुधः ।
सर्वं तदस्मान्मा हिंसीन्न हि तद्दिवा ददृशे दिवः । स्वाहा ॥
इत्यनभिप्रेतं स्वप्नं दृष्ट्वा तिलैराज्यमिश्रैर्जुहोति । ४ ।
अथैतान्यद्भुतप्रायश्चित्तानि भवन्ति । कुम्भा कपोत उपाविक्षत् । मध्यागार उपाविक्षत् । गौगामधैषीत् । स्थूणा व्यरोक्षीत् । वल्मीक उदैक्षीदित्येवंरूपाणि । ५ ।
स पूर्वाह्णे स्नातः प्रयतवस्त्रोहःक्षान्तो ब्राह्मणसंभाषोन्तरागारेग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति । इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोत्यरीरिचम् ॥ इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा । ६ । ॥ १७ ॥

---

I, 17, 4 यथान कल्पता॰ F । ॰पुरगात F ॰पुर्म आगात D । ॰कूत म आगात D । तत्प्रात इत्यदि D । ॰स्मा हि॰ F । त्रिसीं म D हिसीनं A E C s m F । स्वद्विया F F । इत्यभिप्रे॰ D

I, 17, 5 Read कुम्भ्या with Ap 23, 8 । कुपेत F । उपाविविक्षत् D । उपविक्षत C s m. उपाविगत D । ॰धैषी स्थूणा व्यरो॰ D । उदैक्षीत् stands probably for उदर्धक्षीत or an irregular form उद्धक्षीत, comp अदुक्षत for अधुक्षत (Rig Prat IV, 11)

I, 17, 6 पूर्वाह्ण स्ना॰ D । ॰ह शान्तिता D । See above I, 3, 6 । पुण्याहस्व॰ F

इन्द्राग्नी वः प्रस्थापयतामश्विनावभिरक्षताम् ।
बृहस्पतिर्वो गोपालः पूषा वः पुनरुदाजतु ॥
इति गाः प्रतिष्ठमाना अनुमन्त्रयते । पूषा गा अन्वेतु न·
इति च । १ ।

इमा या गाव आगमन्नयक्ष्मा बहुसूवरीः ।
नद्य इव स्रवन्तु समुद्र इव निषिञ्चन्तु ॥
इति गा आयतीः प्रतीक्षते । २ ।

संस्था स्थ संस्था वो भूयास्थाच्युता स्थ मा मा च्योढ्वं माहं
भवतीभ्यश्चौषीः ॥ इति संस्थिताः । ३ ।

ऊर्जा वः पश्याम्यूर्जा मा पश्यत ॥ इति गोष्ठगताः । सह-
स्रपोषं वः पुष्यासम् ॥ इति च । ४ ।

अतो गवां मध्येऽग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा पयसा
जुहोति ।

उद्दीपयस्व जातवेदोऽपघ्नन्निर्ऋतिं मम ।
पशूंश्च मह्यमावह जीवनं च दिशो दिश । स्वाहा ॥
मा नो हिंसीज्जातवेदो गामश्वं पुरुषं जगत् ।
अबिभ्रदग्न आगहि श्रिया मा परिपातय । स्वाहा ।

I 18 1 °श्विनावभि [illegible] । [illegible] रक्षताम C । °रुदाजतु [illegible] । गा प्र [illegible] ।
T [illegible] 2 । इति गावः [illegible]

I 18 2 [illegible] या । आगमन्नय D । °सुवरीः [illegible] । स्रवन्तु D ।
इति गायतीः [illegible]

I 18 3 [illegible] मा [illegible] । भूयास्थ [illegible]
[illegible] for भूयास्त । मा मा [illegible] मा मच्योढ्वं । मामह D । भगवती [illegible] । °श्चौषीः
D [illegible] °स्याति ।

I 18 4 पोष [illegible]

I 18 5 उद्दीपस्व [illegible] । मह्यमवह [illegible] । जीवनं दि [illegible] । पातय [illegible]

अयामिदं न्ययनम् ॥ नमस्ते हरसे शोचिषे ॥ इति च । ५ ।
इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥
त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोत्यरीरिचम् ॥
इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति
यथा पुरस्तात् । ६ । ॥ १८ ॥

## पञ्चमः पटलः

समावृत्त आचार्यकुलान्मातापितरौ बिभृयात् । १ ।
ताभ्यामनुज्ञातो भार्यामुपयच्छेत्सजातां नग्निकां ब्रह्मचारि-
णीमसगोत्राम् । २ ।
अहः पञ्चसु कालेषु प्रातः संगवे मध्यंदिनेपराह्णे सायं
वैतेषु यत्कारी स्यात्पुण्याह एव कुरुते । ३ ।
अग्निमुपसमाधाय परिधानान्तं कृत्वा वधूमानीयमानां स-
मीक्षते ।
सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥ इति । ४ ।
दक्षिणतः पतिं भार्योपविशति । ५ ।
आघारान्तसमन्वारब्धायां परिषिञ्चति यथा पुरस्तात् । ६ ।

I 18 5 न्ययनम F । T S 4 4 1 3
I 18 6 See above I 3 8
I 19 2 ब्रह्मचारि F
I 19 2 °स्सजातान° D E F
I 19 3 C p n वैतेषु कालेषु । D om the whole sutra
I 19 4 परिधाना E । परिधिपरिधानान्त C F । I begins a new sutra
with सुमङ्ग । °यास्त F
I 19 6 आघारान्त° D आघारा E । See Com I 2 7—10

व्याहृतिपर्यन्तं कृत्वा जुहोति ।

अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् ।
तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् ।
स्वाहा ॥

इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ।
अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियम् । स्वाहा ॥

मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु ।
मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज प्रजां पश्यन्ती सुमनस्यमानाम् । स्वाहा ॥

द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनं धयतस्ते पुत्रान्त्सविताभिरक्षतु ।
आ वाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात् । स्वाहा ॥

अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाघम् ।
शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशम् ।
स्वाहा ॥

देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान् ।
क्रव्यादो मृत्यूनधरान्पादयामि दीर्घमायुस्तव जीवन्तु पुत्राः ।
स्वाहा ॥ इति । ७ ।

I, 19, 7 देवाना A । सोऽस्यै C p m । यद्य D । °मघस्य रो° D । °पम्याग्नस्त्रा° D । उथ्या° F । विकेशुर D विकेशुर C । । विराज F । °वक D °वव A । °धानाद्बृ° F । °मुच D । द्विषद्भ्य A । कल्पमान C p m । मत्युनधरान्पाद° F मत्युनधरान्य C p m । °पु त्राय F । पुत्रास्त्वाहा D । इति ।

इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥
त्वमग्ने अयासि ॥ प्रजापते ॥ इति हुत्वाश्मानमास्था-
पयति ।
आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव ।
प्रमृणीहि दुरस्यून्सहस्व पृतनायतः ॥ इति । ८ ।
अपरेणाग्निं द्वयान्दर्भान्पूर्वापरानुदगग्रान्संस्तीर्य तेषु पूर्वाप-
राववतिष्ठेते । ९ । ॥ १९ ॥

---

प्राङ्मुखः प्रत्यङ्मुख्या हस्तं गृह्णीयात्प्रत्यङ्मुखः प्राङ्मुख्या
वा । यदि कामयेत पुंसो जनयेयमित्यङ्गुष्ठं गृह्णीयात् ।
यदि कामयेत स्त्रीरित्यङ्गुलीः । यदि कामयेतोभयं जन-
येयमित्यभीव लोमान्यङ्गुष्ठं सहाङ्गुलिभिर्गृह्णीयात् ।
सरस्वति प्रेदमिव सुभगे वाजिनीवति ।
तां त्वा विश्वस्य भूतस्य प्रजायामस्यग्रतः ॥
गृह्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथासत् ।
भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥
इति । १ ।

---

I 19 8 See above I 3 6 । स्थिरा C p m

I 19 9 द्वयाद॰ C ; D om the whole sutra

I 20 1 ॰त्यङ्मुख्य प्रा॰ A । ॰हुर्णीभि A । Read प्रेदमव according to Bhar I 15, Ap M I 3 5, Baudh I 6 and Par I 7 2, Man I 10 has प्रेदमिव । ॰नीवती A ; Ap M I 3 5 Man I 10 and Par I 7 2 प्रजायामस्यपत without doubt the original reading Bhar I 15, Baudh I 6 and some MSS of Par (see the critical notes) too give प्रजायाम स्यपत ; the Ed यथास with I V X 5 36 Bhar I 15 Baudh I 6 Ap M I 3 3 etc

तामग्रेण दक्षिणमंसं प्रतीचीमभ्यावृत्याभिमन्त्रयते।
अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः।
जीवसूर्वीरसूः स्योना शं न एधि द्विपदे शं चतुष्पदे॥
तां नः पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति।
या न ऊरू उशती विस्रयाते यस्यामुशन्तः प्रहरेम शेपम्॥
सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः।
तृतीयो अग्निष्टे पतिस्तुरीयोहं मनुष्यजाः॥
सोमोददाद्गन्धर्वाय गन्धर्वोग्नयेददात्।
पशूंश्च मह्यं पुत्रांश्चाग्निर्ददात्यथो त्वाम्॥
अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेहि
संभवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पो-
षाय सुप्रजास्त्वाय सुवीर्याय॥
इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कुरु।
दशास्यां पुत्रानाधेहि पतिमेकादशं कुरु॥ इति। २।
तां यथायतनमुपवेश्याथास्या अञ्जलावाज्येनोपस्तीर्य ला-
जान्द्विरावपति।
इमाँल्लाजानावपामि समृद्धिकरणान्मम।

तुभ्यं च संवननं तदग्निरनुमन्यतामयम् ॥ इति । ३ ।
अभिधाय ।
इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती ।
दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम । स्वाहा ॥
इति तस्या अञ्जलिना जुहोति । ४ ।
उदायुषा ॥ इत्युत्थाप्य ।
विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः ॥
इति प्रदक्षिणमग्निं परिक्रम्य तथैव लाजानावपति । ५ ।
द्वितीयं परिक्रम्य तथैव लाजानावपति । ६ ।
तृतीयं परिक्रम्य सौविष्टकृतं जुहोति । ७ ।
अत्रैके जयाभ्यातानानराष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ८ ।
तामपरेणाग्निं प्राचीमुदीचीं वा विष्णुक्रमान्क्रामयति । ९ ।
अथैनां संशास्ति । दक्षिणेन प्रक्रम्य सव्येनानुप्रक्राम मा सव्येन दक्षिणमतिक्रामीः ॥ इति । १० । ॥ २० ॥

---

एकमिषे विष्णुस्त्वान्वेतु । द्वे ऊर्जे विष्णुस्त्वान्वेतु । त्रीणि व्रताय विष्णुस्त्वान्वेतु । चत्वारि मायोभवाय विष्णुस्त्वान्वेतु । पञ्च पशुभ्यो विष्णुस्त्वान्वेतु । षड्रायस्पोषाय

---

I, 20, 3 उभ्य च E । °तामियम C s m F
I 20, 4 °वपती F
I, 20, 5 G adds त्वाम before उदा° । T S I 2 S । लाजानाधपि L
I, 20, 8 Ste above I 3 8
I 21 9 °न्क्रामयति E
I, 20 10 All MSS °अतिक्रामी but no note in the comm

विष्णुस्त्वान्वेतु । सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु ॥ इति । १ ।

सप्तमं पदमवस्थाय जपति । सखायौ सप्तपदावभूव सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मा योष्ठाः ॥ इति । २ ।

अथास्या दक्षिणेन पादेन दक्षिणं पादमवक्रम्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेशमभिमृशति यथा पुरस्तात् । ३ ।

प्राणानां ग्रन्थिरसि स मा विस्रसः ॥ इति नाभिदेशम् । ४ ।

तामपरेणाग्निं प्राचीमुपवेश्य पुरस्तात्प्रत्यङ् तिष्ठन्नद्भिः प्रोक्षति । आपो हि ष्ठा मयोभुवः ॥ इति तिसृभिः । हिरण्यवर्णाः शुचयः पावकाः ॥ इति चतसृभिः । पवमानः सुवर्जनः ॥ इति चैतेनानुवाकेन । ५ ।

अथ बीजान्यधिवपन्ति । ६ । ॥ २१ ॥

षष्ठः पटलः

---

तां ततः प्रवाहयन्ति प्र वा हारयन्ति । १ ।

समोप्यैतमग्निमनुहरन्ति । २ ।

नित्यो धार्यः । ३ ।

---

I 21 1 E om इति ।
I 21 2 E । सप्तम पदमवस्थाय जपति । °पदाभूव C °पदावभूम D
I 21 3 अथास्य C D E । See above I 5 11
I 21, 4 प्राणदेश उभाय पर्यायाना D
I 21 D ins सव्य before पुरस्ता° । °स्यायदृयुप्रभिमृ° D । See above I 10 2
I 22 2 समाप्ये E । E om धार्यम ।

अनुगतो मन्थ्यः श्रोत्रियागाराद्वाहार्यः । ४ ।

उपवासश्चानुगते भार्यायाः पत्युर्वा । ५ ।

आगारं प्राप्याथैनां संशास्ति । दक्षिणं पादमग्रेतिहर देहलिं माधिष्ठाः ॥ इति । ६ ।

पूर्वार्धे शालायां न्युप्योपसमादधाति । ७ ।

अपरेणाग्निं लोहितमानडुहं चर्म प्राचीनग्रीवमुत्तरलोमास्तृणाति । ८ ।

तस्मिन्प्राङ्मुखावुदङ्मुखौ वोपविशतः । पश्चात्पतिं भार्योपविशति ।

इह गावो निषीदन्त्विहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणोपि पूषा निषीदतु ॥ इति । ९ ।

वाचंनियमावासात आ नक्षत्राणामुदयात् । १० ।

उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य । देवीः षडुर्वीः ॥ इति दिश उपतिष्ठते । ११ ।

मा हास्महि प्रजया ॥ इति नक्षत्राणि । १२ ।

मा रधाम द्विषते सोम राजन् ॥ इति चन्द्रमसम् । १३ ।

सप्तर्षयः प्रथमां कृत्तिकानामरुन्धतीं ये ध्रुवतां ह निन्युः ।
षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकं भ्राजत्वष्टमी ॥

---

I, 22, 4 °द्वाहायस्था° E C

I, 22, 6 °थैना शास्ति D

I, 22, 9 नवेद° A निषिदन्ति° F

I, 22, 10 वाचयमा° C p m

I, 22, 11 दिशमुप E F ; This mantra and the next two are found T b 1, 7, 11 2

I, 22 13 सप्त ऋषय D ; C p m om ये ; नन्यु° F ; भा जत्व° C ; °त्वष्टमिति F

इति सप्तर्षीनुपस्थाय ध्रुवमुपतिष्ठते ।
ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवत स्थितम् ।
त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः ॥
नमो ब्रह्मणे ध्रुवायाच्युतायास्तु नमो ब्रह्मणः पुत्राय प्रजापतये नमो ब्रह्मणः पुत्रेभ्यो देवेभ्यस्त्रयस्त्रिंशेभ्यो नमो ब्रह्मणः पुत्रपौत्रेभ्योऽङ्गिरोभ्यः ॥
यस्त्वा ध्रुवमच्युतं सपुत्रं सपौत्रं ब्रह्म वेद ध्रुवा अस्मिन्पुत्राः पौत्रा भवन्ति । प्रेष्यान्तेवासिनो वसनं कम्बलानि कंसं हिरण्यं स्त्रियो राजानोऽन्नमभयमायुः कीर्तिर्वर्चो यशो बलं ब्रह्मवर्चसमन्नाद्यमित्येतानि मयि सर्वाणि ध्रुवाण्यच्युतानि सन्तु । १४ । ॥ २२ ॥

---

ध्रुवं त्वा ब्रह्म वेद ध्रुवोहमस्मिँल्लोकेस्मिंश्च जनपदे भूयासम् ॥
अच्युतं त्वा ब्रह्म वेद माहमस्माल्लोकादस्माच्च जनपदाच्योषि द्विषन्मे भ्रातृव्योस्माल्लोकादस्माच्च जनपदाच्च्यवताम् ।
अचेष्टं त्वा ब्रह्म वेद माहमस्माल्लोकादस्माच्च जनपदाच्चेष्टिषि द्विषन्मे भ्रातृव्योस्माल्लोकादस्माच्च जनपदाच्चेष्टताम् ।
अव्यथमानं त्वा ब्रह्म वेद माहमस्माल्लोकादस्माच्च जनपदाद्व्यथिषि द्विषन्मे भ्रातृव्योस्माल्लोकादस्माच्च जनपदाद्व्यथताम् ॥

---

I 22 14 ध्रुवमुपतिष्ठते is cancelled in D । °क्षितिर्ध्रु° D । ध्रुवमसि स्थित F ध्रुव स्थित C p m । देवेभ्य स्त्र° C F । ब्रह्मपुत्र C p m । सुपुत्र D E F । ध्रुवास्मि° C D । भवति D । यमनक D । कीर्तिर्यशा C F । D o । बल
I 23 1 °मस्मिँल्लोके° C D E F । °पदाच्च्यावोहि° F । भ्रात्यो° F । °पदाच्चोष्टिषि D । °पदाच्चेष्टताम D

नभ्यं त्वा सर्वस्य वेद नभ्यमहमस्य जनपदस्य भूयासम् ।
मध्यं त्वा सर्वस्य वेद मध्यमहमस्य जनपदस्य भूयासम् ।
तन्तिं त्वा सर्वस्य वेद तन्तिरहमस्य जनपदस्य भूयासम् ।
मेथीं त्वा सर्वस्य वेद मेथ्यहमस्य जनपदस्य भूयासम् ।
नाभिं त्वा सर्वस्य वेद नाभिरहमस्य जनपदस्य भूयासम् ॥
यथा नाभिः प्राणानां विषूवानेवमहं विषूवान् । एकशतं
तं पाप्मानमृच्छतु योस्मान्द्वेष्टि यं च वयं द्विष्मो भूयांसि
मामेकशतात्पुण्यान्यागच्छन्तु ॥ इति । १ ।
अत्र मनोज्ञेन संभायागारं प्राप्याथैनामाग्नेयेन स्थालीपाकेन
याजयति । २ ।
पत्न्यवहन्ति । ३ ।
श्रपयित्वाभिघार्योद्वास्याग्नये हुत्वाग्नये स्विष्टकृते जुहोति । ४ ।
तेन ब्राह्मणं विद्यावन्तं परिवेवेष्टि । ५ ।
योस्यापचितो भवति तस्मा ऋषभं ददाति । ६ ।
नित्यमत ऊर्ध्वं पर्वस्वाग्नेयेन स्थालीपाकेन यजते । ७ ।
नित्यं सायं प्रातर्व्रीहिभिर्यवैर्वा हस्तेनैते आहुती जुहोति ।
अग्नये स्वाहा ॥ प्रजापतये स्वाहा ॥ इति । ८ ।
सौरीं पूर्वां प्रातरेके समामनन्ति । ९ ।
त्रिरात्रमक्षारालवणाशिनावधःशायिनावलंकुर्वाणौ ब्रह्म-
चारिणौ वसतः । १० ।

---

I, 23, 1 नभ्यहमस्य D । मध्याहमस्य D । तन्तिरम° F । मेध्यमहम° I मेथि-रहमस्य E ; E om. स before पाप्मानं । °शतपुण्या° D p. m.
I, 23, 2 मनोज्ञेय F
I, 23, 4 D has श्रपयित्वा in the margin
I, 23, 8 प्रातर्व्री° D । °हुतौजुहोति I । D om. अग्नये° °इति ।

चतुर्थ्यामपररात्रेऽग्निमुपसमाधाय प्रायश्चित्तिपर्यन्तं कृत्वा नव प्रायश्चित्तीर्जुहोति । ११ । ॥ २३ ॥

---

अग्ने प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै घोरा तनूस्तामितो नाशय स्वाहा ॥
वायो प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै निन्दिता तनूस्तामितो नाशय स्वाहा ॥
आदित्य प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पतिघ्नी तनूस्तामितो नाशय स्वाहा॥
आदित्य प्रायश्चित्ते वायो प्रायश्चित्तेऽग्ने प्रायश्चित्तेऽग्ने प्रायश्चित्ते वायो प्रायश्चित्त आदित्य प्रायश्चित्ते ॥ इति । १ ।
हुत्वाथास्यै मूर्ध्नि संस्रावं जुहोति। भूर्भगं त्वयि जुहोमि स्वाहा॥ भुवो यशस्त्वयि जुहोमि स्वाहा॥ सुवः श्रियं त्वयि जुहोमि स्वाहा ॥ भूर्भुवः सुवस्त्विषिं त्वयि जुहोमि स्वाहा॥ इति । २ ।
अत्रैवोदपात्रं निधाय प्रदक्षिणमग्निं परिक्रम्यापरेणाग्निं प्राचीमुदीचीं वा संवेश्याथास्यै योनिमभिमृशति ।
अभि त्वा पञ्चशाखेन शिवेनाविद्विषावता ।
साहस्रेण यशस्विना हस्तेनाभिमृशामसि सुप्रजास्त्वाय ॥ इति । ३ ।

---

I 24 1 E o 1 ब्राह्मण °धावामि 1 the second and third mantra E o 1 यास्यै प्रायश्चित्ते coming after आदित्य प्रायश्चित्ते ।

I 24 2 मुवस्त्विष \ सुव स्त्विषि C F

I 24 3 अभिमृशा D F । हस्तेन विद्विषावता E r I 19 शिवेनाभिद्वि all MSS except H । सहस्रेण C D F and Bl ar I 13

अथैनामुपयच्छते ।
सं नाम्न' सं हृदयानि सं नाभिः सं त्वचः ।
सं त्वा कामस्य योक्त्रेण युञ्जान्यविमोचनाय ॥ इति । ४ ।
अथैनां परिष्वजते ।
मामनुव्रता भव सहचर्या मया भव ।
या ते पतिघ्नी तनूर्जारघ्नी त्वेता करोमि ।
शिवा त्वं मह्यमेधि क्षुरपविर्जारेभ्यः ॥ इति । ५ ।
अथास्यै मुखेन मुखमीप्सते ।
मधु हे मध्विदं मधु जिह्वा मे मधुवादिनी ।
मुखे मे सारघं मधु दत्सु संवननं कृतम् ॥
चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम् ।
यद्युक्तो देवगन्धर्वस्तेन संवनिनौ स्वके ॥ इति । ६ ।
त्रिरात्रं मलवद्वाससा ब्राह्मण्याख्यातानि व्रतानि चरति । ७ ।
चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामाचम्यो-
पह्वयते । ८ । ॥ २४ ॥

---

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥

---

I 24 4 Read with Baudh Gr Parisb 2 स नौ मन• म तनुत्यच I correct नाभि ।

I 24 5 महचर्या all MSS

I 24 6 Instead of मध्विदं मधु Bhar I 16 and Baudh I 6 give मध्यमाह । मयननं F । Instead of स्वके read स्वह for स्व (Baudh I 6)

I 24 7 त्रिरात्रमल A । •द्वासा F C s m । D has only the pratika of the sutra

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनावुभावाधत्तां पुष्करस्रजौ ॥
हिरण्ययी अरणी यं निर्मन्थतो अश्विना ।
तं ते गर्भं हवामहे दशमास्याय सूतवे ॥
यथाग्निगर्भा पृथिवी द्यौर्यथेन्द्रेण गर्भिणी ।
वायुर्यथा दिशां गर्भ एवं गर्भं दधामि ते ॥
यस्य योनिं प्रति रेतो गृहाण पुमान्पुत्रो जायतां गर्भो अन्तः ।
तं माता दश मासो बिभर्तु स जायतां वीरतमः स्वानाम् ॥
आ ते गर्भो योनिमेतु पुमान्बाण इवेषुधिम् ।
आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः ॥
करोमि ते प्राजापत्यमा गर्भो योनिमेतु ते ।
अनूनः पूर्णो जायतामनन्धोऽश्रोणोऽपिशाचधीरः ॥
यानि प्रभूणि वीर्याण्यृषभा जनयन्तु नः ।
तैस्त्वं गर्भिणी भव स जायतां वीरतमः स्वानाम् ॥
यो वशायां गर्भो यश्च वेहतीन्द्रस्तं निदधे वनस्पतौ ।
तेन त्वं गर्भिणी भव सा प्रसूर्धेनुगा भव ॥
सं नाव्रः ॥ चाक्रवाकम् ॥ इति च । १ ।
भूः प्रजापतिनात्यृषभेण स्कन्दयामि वीरं धत्स्वासौ ।
भुवः प्रजापतिनात्यृषभेण स्कन्दयामि वीरं धत्स्वासौ ।

---

I 25 1 सिनीवालो C [illegible] सरस्व D [illegible] सरस्वि D [illegible] यथाग्निगं C [illegible] यस्य Saikh [illegible] read यस्य with Ap M [illegible] 13, 8 [illegible] विभर्ति C E p n [illegible] पुमान्बाण F [illegible] यानि C [illegible] Read with S [illegible] C and Ath V III 23 [illegible] जनयन्ति for जनयन्तु [illegible] °श्रोण्य नि° C [illegible] °द्र [illegible] F [illegible] Read °धीरः according to S [illegible] 19 [illegible] and Ath V III 23 [illegible] I 24 4 and [illegible]

सुवः प्रजापतिनात्वृषभेण स्कन्दयामि वीरं धत्स्वासौ ॥
इति वीरं हैव जनयति । २ ।
सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीत्याचेयः । ३ ।
यच्चादौ यच्चान्ताविति बादरायणः । ४ । ॥ २५ ॥

---

[पाणिग्रहणादिरग्निस्तमौपासनमित्याचक्षते । १ ।
तस्मिन्गृह्याणि कर्माणि क्रियन्ते । २ ।
तस्यौपासनेनाहिताग्नित्वं तथा पार्वणेन चरुणा दर्शपूर्ण-
मासयाजित्वं चेति । ३ ।
द्वादशाहं विच्छिन्नः पुनराधेयः । ४ ।
प्रतिसंख्याय वा सर्वान्होमाञ्जुहुयात् । ५ ।
परिश्रित उद्धतेवोक्षिते सिकतोपोप्ते । ६ ।
उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छाद्य यथालाभं तूष्णीं
संभारान्संभृत्य याज्ञिकात्काष्ठादग्निं मथित्वा लौकिकं
वाहृत्य सते कृत्वा प्रज्वलयित्वाभ्यादधाति । ७ ।
भूर्भुवः सुवरो प्रतिष्ठ ॥ इति । ८ ।
अथैनमग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा द्वे मिन्दाहुती
जुहोति । यन्म आत्मनो मिन्दाभूत् ॥ पुनरग्निश्चक्षुर-
दात् ॥ इति । ९ ।

I 25 2 हैव A D
I 25 3 °स्यात्रय E
I 26 ? °ग्नित्व यथा E । चरुणा A
I 26 5 °न्होमान्तु C °न्होमा तु D E
I 26 6 परिश्रि E । °वोक्षते D । कतोपोप्ते E
I 26 7 °प्लक्षशाखा A । तूष्णीं A । सते कृत्वा all MSS । प्रज्वालयि
E F । °भ्यादधाति D
I 26 9 T S 3 2 5 1

तिस्रस्तन्तुमतीर्जुहोति । तन्तुं तन्वन् ॥ उद्बुध्यस्वाग्ने ॥ त्रय-
स्त्रिंशत्तन्तवः ॥ इति । १० ।
चतस्रोऽभ्यावर्तिनीर्जुहोति । अग्नेऽभ्यावर्तिन् ॥ अग्ने अङ्गिरः ॥
पुनरूर्जा ॥ सह रय्या ॥ इति । ११ ।
एकैकशो व्याहृतीः समस्ताश्च । १२ ।
हुत्वा ।
अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि ।
अयसा मनसा धृतोऽयसा हव्यमूहिषेया नो धेहि भेषजम् ।
स्वाहा ॥ इत्येतां मनस्वतीम् । १३ ।
प्राजापत्यां सप्तवतीं च हुत्वा दशहोतारं मनसानुद्रुत्य सग्रहं
हुत्वा ॥ इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥
स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य
कर्मणोऽत्यरीरिचम् ॥ इति च । अत्रैके जयाभ्याताना-
न्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । १४ ।
ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाच-
यित्वा प्रसिद्धमाग्नेयेन स्थालीपाकेन यजते । १५ ।
अथ गुरवे वरं ददाति वाससी धेनुमनड्वाहं वा । १६ ।
यदि मयायाञ्चाख्यातमात्मन्नरण्योर्वा समारोपणम् । १७ ।
समिधि वा समारोपयेत् । १८ ।

---

I 26 10 T ९ ३ I 2 2 I 7 13 I 5 10, I
I 26 11 °भ्यावर्तनो F सिनी कु D I T ५ I 2 I 2 3
I 26 13 °यद्याग्ने स्य D
I 26, 14 A om स त्व नो अग्ने । प्रजापतेयद D । चात्रैके A । See above I 3 5
I 26 17 मयाञ्चा D मयायाख्यातमात्मन्नरण्योर्वा समारोपणे ° स I

अरणी कल्पेन खादिरः पालाश औदुम्बर आश्वत्थश्च । १९ ।

अन्वेकतरस्मिन्यचावस्येत्तस्मिञ्छ्रोत्रियागारादग्निमाहृत्याजुह्वानः । उद्बुध्यस्व ॥ इति द्वाभ्यां यस्यां समारूढस्तामादधाति । २० ।

व्याख्यातो होमकल्पः । २१ ।

यदि पार्वणो विच्छिद्येत तस्मिन्पाथिकृतेन याजयेत्। यदि द्वौ वैश्वानरपाथिकृतौ। यदि वहून्पुनराधेयः। यदि नाशे विनाशे वान्यैरग्निभिरग्नी संसृष्टे वा पुनराधेयः।२२।॥२६॥]

सप्तमः पटलः

---

शालां कारयिष्यन्नुदगयन आपूर्यमाणपक्षे रोहिण्यां चित्रु चोत्तरेष्वग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति। इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोत्यरीरिचम् ॥ इति च। अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वाहतं वासः

---

I 26 19 Probably अरणि m to be read । खादिरो पालाश्यौदुम्बर्या अश्वत्थ्यौ वा A । C om च ।

I 26 20 C F om अत्र । °स्मिन्छ्रो C D E F । T S 4 7, 13 5

I, 26 22 Instead of the acc वहून् the nom बहव is required । The last यदि disturbs the construction and is superfluous । वा अन्यैर° C E वान्यैर्वाग्निभि° A । °भिरग्नय स D । The chapter on which no comm is given and which is wanting in B and G is no doubt spurious The colophon of Prasna I however includes it and the number of the chapters is stated to be 29

I 27 1 श्चयामि F । See above I 3 9

परिधायाप उपस्पृश्य। देवस्य त्वा॥ इत्यभ्रिमादाय। परिलिखितम्॥ इति त्रिः प्रदक्षिणं परिलिख्य यथार्थमवटान्खात्वाभ्यन्तरंपांसून्करोति। १।

इहैव ध्रुवां निमिनोमि शालां क्षेमे तिष्ठति घृतमुक्षमाणा। तां त्वा शाले सुवीराः सर्ववीरा अरिष्टवीरा अनुसंचरेम॥ इति दक्षिणां द्वारस्थूणामुच्छ्रयति। २।

इहैव ध्रुवा प्रतितिष्ठ शाले अश्वावती गोमती सूनृतावती। ऊर्जस्वती पयसा पिन्वमानोच्छ्रयस्व महते सौभगाय॥ इत्युत्तराम्। ३।

आ त्वा कुमारस्तरुण आ वत्सो जगता सह। आ त्वा हिरण्मयः कुम्भ आ दध्नः कलशैरयन्निव॥ इति संमितावभिमृशति। ४।

एवमेव स्थूणाराजावुच्छ्रयति। ५।

एवमभिमृशति। ६।

ऋतेन स्थूणावधिरोह वंशोग्रो विराजन्नपसेध शत्रून्। अथास्मभ्यं सहवीरां रयिं दाः॥ इति पृष्ठवंशमारोपयते। ७।

---

I, 27, 1 T S 6, 2, 10, 1 । यथार्थायटा॰ D

I, 27, 2 निमिनोमि C । तिष्ठ F । ॰मुक्षमाणाः D । सर्वावीरा D in the margin । ॰चराम A । द्वारस्थूणा॰ F

I, 27, 3 प्रतिष्ठ F । ऊर्जे॰ C F

I, 27, 4 जगता सह Bhār II, 3 and Ath V III, 12, 7 Mān II, 11 gives जगदा सह, while Par III, 4, 4 has जगदैः सह In Āśv. II, 8, 16 and Āp M II, 15, 4 we find आयतां सह । ओदनः कलशैरयन्निव F. Read with Āp and Bhār कलशैरयन्, as a nom pl is required The other parallel passages have all कलशैः, owing to a bad pronunciation

I, 27, 6 ॰मृशम॰ F

I, 27, 7. स्थूणावधि॰ D । वंशोर्ध्वा D । ॰वंश मारो॰ D । पृष्ठ समारोहयते F.

मा नः सपत्नः शरणः स्योना देवो देवेभिर्विमितास्यग्रे ।
तृणं वसानाः सुमना असि त्वं शं न एधि द्विपदे शं चतुष्पदे॥
इति छन्नामभिमृशति । ८ ।
ततोनूराधैर्वास्तुशमनम् । ९ ।
निशायामन्तरागारेग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जु-
होति । १० । ॥ २७ ॥

---

वास्तोष्पते ॥ वास्तोष्पते ॥ इति द्वे ।
वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो ।
अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व। स्वाहा॥
अपैतु मृत्युरमृतं न आगन्वैवस्वतो नो अभयं कृणोतु ।
पर्णं वनस्पतेरिवाभि नः शीयतां रयिः सचतां नः शची-
पतिः । स्वाहा ॥
परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात् ।
वास्तोष्पते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत
वीरान् । स्वाहा ॥
इदमू नु श्रेयो वसानमागन्म यद्गोजिद्धनजिदश्वजिद्यत् ।
पर्णं वनस्पतेरिवाभि नः शीयतां रयिः सचतां नः शची-
पतिः । स्वाहा ॥

---

I 27, 8 सुपत्नशरणास्योना D । शरणा Bl ar II, 3 । °मितायै F । Ath V III, 12, 5 मानस्य पत्नि शरणा स्योना देवी देवेभिर्निमितास्यग्रे is more correct । Read with Bl ar and Ath V l c वसाना । D om the second श । छन्नायभि C D E छिन्नयभि° F See the comm

I, 27, 9 °राधैवा° F °राधैर्वै° D

I 28, 1 T b 3, 4, 10, 1 । गयस्पानो D F । °रिन्द्रो E । D om स्वाहा । कृणुतु F । मृत्यौपरि F । F om स्वाहा । इदमूनु C D E

इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥
त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोत्यरीरिचम् ॥
इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति
यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्व-
स्त्ययनमृद्धिमिति वाचयित्वा । १ ।
एवं विहितं संवत्सरे संवत्सरे वास्तुशमनम् । २ ।
ऋतावृतावित्येके । ३ । ॥ २८ ॥

---

गृहा मा बिभीत मा वेपिद्ध्वमूर्जं बिभ्रत एमसि ।
ऊर्जं बिभ्रद्वसुवनिः सुमेधा गृहानेमि मनसा मोदमानः ॥
येषामध्येति प्रवसन्नेति सौमनसो बहुः ।
गृहानुपह्वयामहे ते नो जानन्तु जानतः ॥
उपहूता इह गाव उपहूता अजावयः ।
अथो अन्नस्य कीलाल उपहूतो गृहेषु नः ॥
उपहूता भूरिसखाः सखायः स्वादुसंमुदः ।
अरिष्टाः सर्वपूरुषा गृहा नः सन्तु सर्वदा ॥
ऊर्जस्वन्तः पयस्वन्त इरावन्तो हसामुदः ।
अनश्या अतृष्या गृहा मास्मद्बिभीतन ॥
इति गृहानभ्येति । १ ।

---

I, 28, 1 See above I, 3 8

I, 29 1 °येषांस्त्वमूर्जं D F C p m and Bhar I 20 , अभ्येति C F F । According to Bhar l c , Sankh III 7, 2 and Ath V VII 60, 3 we ought to read प्रवसन्येषु सौमनसो बहु । सौमनसं F C p m । ते ते नो E । अन्नकीलाल उपहूता E । आनम्या F Perhaps अननाश्या अतृष्या स्त to be read, compare Ath V VII, 60 4

क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शं योः शं योः ॥
इति प्रविशति न तदहरागतः कलहं करोति ।
गृहानहं सुमनसः प्रपद्ये अवीरघ्नो वीरतमः सुशेवान् ।
इरां वहन्तः सुमनस्यमानास्तेष्वहं सुमनाः संविशामि ॥
इति संविशति ।
विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः॥
इति भार्यां समीक्षते समीक्षते । २ । ॥ २९ ॥

अष्टमः पटलः

प्रथमः प्रश्नः समाप्तः ॥

---

अथातः सीमन्तोन्नयनम् । १ ।
प्रथमगर्भायाश्चतुर्थे मास्यापूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्निमु-
पसमाधाय व्याहृतिपर्यन्तं कृत्वा । धाता ददातु नो र-
यिम् ॥ इति चतस्रो धात्रीर्जुहोति । २ ।
इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥
त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोऽत्यरीरिचम् ॥
इति च ॥ अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति
यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्व-

---

I 29 2 क्षेमाय शान्त्यै प्रपद्यते F । शग्म D । यो श F । प्रपद्येशो D F
p m
II 1 2 T S 3 3 11 2 3
II 1, 3 See above I 3 8

स्त्ययनमृद्धिमिति वाचयित्वा स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभायामपरेणाग्निं मण्डलागारे प्राचीमुपवेश्य वेण्या शलल्या शलालुग्यप्समुपसंगृह्य पुरस्तात्प्रत्यङ् तिष्ठन्व्याहृतीभिः । राकामहम् ॥ यास्ते राके ॥ इति द्वाभ्यामूर्ध्वं सीमन्तमुन्नीयाभिमन्त्रयते ।

सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः । विवृत्तचक्रा आसीनास्तीरे तुभ्यं गङ्गे ॥

विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः ॥ इति । ३ । ॥ १ ॥

---

अथातः पुंसवनम् । १ ।

तृतीये मास्यापूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा । धाता ददातु नो रयिम् ॥ इति चतस्रो धात्रीर्जुहोति ॥ इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोत्यरीरिचम् ॥ इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभायामपरेणाग्निं मण्डलागारे प्राचीमुपवेश्य । वृषासि ॥ इति तस्या दक्षिणे पाणौ यवमादधाति । २ ।

---

II 1 3 महमा F । °मुपविश्य F । °यप्समु F द्रप्स D । °व्याहृतिभि C D F । T S 3 3 11 5 । °र्ब्राह्मणो D । तचक्र D ; Bl ar I ? Baudh I 15 and Ap M II 11 12 सोमिलासौ मय ।

II 2 2 T S 1, 3 11 2 3 ; See above I 3 5

आरण्डी स्थः ॥ इत्यभितो यवं सर्षपौ धान्यमाषौ वा । ३ ।
भ्रावृत्तत् ॥ इति दधिद्रप्सम् । तदेनां प्राशयति । ४ ।
आचान्ताया उदरमभिमृशति । आभिष्ट्वाहं दशभिरभिमृशामि
दशमास्याय सूतवै ॥ इति । ५ ।
न्यग्रोधशुङ्गं वा घृतेन कोशकारीं वा प्रैयङ्गवेण संयावेन
यूपशकलं वौत्तरपूर्वस्याभिष्टेरग्निं वा निर्मन्थ्य मूलमू-
लोपधानायै दक्षिणे नासिकाछिद्रे प्रणयेत् । ६ ।
यदि गर्भः स्रवेदार्द्रेणास्याः पाणिना त्रिरूर्ध्वं नाभेरुन्मार्ष्टि ।
पराञ्चं त्वा नार्वाञ्चं त्वष्टा बध्नातु बन्धने ।
स ऋतूननुप्रवेश्य दश मासो अवीरहा ॥ इति । ७ ।
विजननकाले क्षिप्रप्रसवनम् । शिरस्त उदकुम्भं निधाय
पत्तस्तूर्यन्तीमपास्या उदरमभिमृशति । ८ । ॥ २ ॥

---

यथैव वायुः पवते यथा समुद्र एजति ।
एवं ते गर्भ एजतु सह जरायुणावसर्पतु ॥
इत्यवाङवमार्ष्टि । १ ।

---

II, 2, 1 श्यावृत्त इति F s m Perhaps स्यावृत्तत to be read

II, 2, 5 अभिष्ट्वा॰ D F s m Âp M II, 11, 11, too, has भ्राभिष्ट्वा॰ ।

II, 2 6 प्रयन्त॰ C E प्रयग॰ F । चोत्तर॰ D F p m । ॰स्याग्निष्टेरथे वा C s m ॰स्याभिसिष्टेर॰ C p m ॰स्याभिसिष्टेरग्नि निर्म॰ E ॰स्याष्टेरग्नि F p m । मूल॰ h.k मुरू॰ D । ॰मुलो॰ C D ॰मुतो॰ F

II, 2 7 बन्धने given by Bhar I, 21, seems to be more correct

II, 2 8 क्षिप्र प्रवन F

II, 3, 1 सह which Âp M II, 11, 15 सह जरायुणा निष्क्रम्य प्रतितिष्ठतु Bhar I, 21 सह जरायुणाथपद्यताम and Baudh Gri Paris II, 2 सह जरायुणावसर्पतु give likewise is superfluous

जातेऽश्मनि परशुं निधायोपरिष्टाद्धिरण्यं तेपूत्तराधरेष्वुपरि-
ष्टात्कुमारं धारयति ।

अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।
वेदो वै पुत्रनामासि जीव त्वं शरदः शतम् ॥
अङ्गादङ्गात्संभवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ इति । २ ।

यद्यपरा न पतेदञ्जलिनोदकमादाय मूर्धानमस्यावसिञ्चेत् ।
तिलदेव पद्यस्व न मांसमसि नो दलम् । अवपद्यस्व स्व-
पयात् ॥ इति । ३ ।

उपनिर्हरन्त्यौपासनमतिहरन्ति सूतिकाग्निम् । ४ ।

स एष उत्तपनीय एव । ५ ।

नास्मिन्किञ्चन कर्म क्रियतेऽन्यचोद्धूपनात् । ६ ।

अथैनं कणैः सर्षपमिश्रैरुद्धूपयति ।
शण्डो मर्क उपवीरः शाण्डीकेर उलूखलः । च्यवनो नश्यता-
दितः । स्वाहा ॥
आलिखन्विलिखन्ननिमिषन्किंवदन्त उपश्रुतिः । स्वाहा ॥
अर्यम्णः कुम्भी शत्रुः पात्रपाणिर्निपुणिः । स्वाहा ॥
आन्त्रीमुखः सर्षपारुणो नश्यतादितः । स्वाहा ॥

---

II 3 2 D in प्राच before कुमार । स जीव शर D in the first mantra

II 3 3 According to the comm we ought to read °सस्या अव सिञ्चेत । F om न after पद्यस्व । °पद्यस्यस्तात D °पद्यस्यस्यात F द्यस्व पयात C F स्वपयात is given by H

II 3 6 °द्धूपनाये F

II 3 7 शाण्डि° F C p m Ap M II 13 S has शौण्डिकेर Har I II 23 शौण्डिकेय Bhar I 22 सुण्डिकेर । पलिस्व° F । Par I c gives नर्मणि instead of निपुणि । I r has हन्त्रीमुख ।

केशिनी श्वलोमिनी वजाबोजोपकाशिनी । अपेत नश्य-
तादितः । स्वाहा ॥
कौवेरका विश्ववासो रक्षोराजेन प्रेषिताः ।
ग्रामान्सजातयो यन्तीप्सन्तः परिजाकृतान् । स्वाहा ॥
एतान्हतैतान्वध्नीतेत्ययं ब्रह्मणो दूतस्तानग्निः पर्यसरत् ।
तानिन्द्रस्तान्बृहस्पतिस्तानहं वेद ब्राह्मणः ।
प्रमृशतः कूटदन्तान्विकेशाँल्लम्बस्तनान् । स्वाहा ॥
नक्तंचारिण उरस्पेशाञ्छूलहस्तान्कपालपान् । स्वाहा ॥
पूर्व एषां पितेत्युच्चैःश्राव्यकर्णकः ।
माता जघन्या गच्छन्ति ग्रामे विधुरमिच्छन्ती । स्वाहा ॥
नक्तंचारिणी स्वसा सन्धिना प्रेक्षते कुलम् ।
या स्वपन्तु जागर्ति यस्यै विजातायां मनः । स्वाहा ॥
तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् । अग्ने अक्षीणि
निर्दह । स्वाहा ॥
इति प्रतिमन्त्रमङ्गारेष्वावपति । ७ ।

---

II 3 7 यजाबोपका° D Ap M II, 13 10 gives सप्तजा° पीजोप काशिनी Bhar I 22 अजाबोजोप° । Bhar I 22 and Ap M II 13, 11 give विश्वग्रामम् कौबेरका रक्षा । ग्रामे F । °प्सत F °प्सतोपरिजाकृ° D सजातयो गच्छन्तोच्छन्तो परिजाकृता स्वाहा Ap M l c सजातयो गच्छन्तीछन्ती परिजाकृता स्वाहा Bhar l c । ब्राह्मणो F p m । तानिन्द्र स्ता° F । Read लम्बस्तनान with Bhar l c । °स्पेशान छू° O °स्पेशान्छू° F °स्पेशान्यू° D उपस्पेशा छू° F । पूर्वं एषा° °र्णक thus also Ap M II, 14, 1 and Bhar । Read गच्छति Ap M l c gives सर्पति and विधुरमि° instead of विधु रमि । प्रदोषधारिणी (sic) given by Bhar corresponds better with the metre । प्रेक्षते C D F । यायस्यय° F स्वपन्तु F । यास्यै F F । Bhar gives या स्वपन्तं बोधति यस्यै । °वर्मने F °वत्मने F । °क्षिणि D F Read अग्ने अक्षीणि with Ap M II 14 2

ततः पाणी प्रक्षाल्य भूमिमालभते।
यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम्।
तस्यामृतत्वस्य नो धेहि माहं पौत्रमघं रुदम्॥
वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम्।
तथामृतत्वस्येशानो माहं पौत्रमघं रुदम्॥ इति। ८।
अथातो मेधांजननम्। दर्भेण हिरण्यं प्रबध्य तदन्तर्धायोप-
रिष्टात्प्राञ्चं कुमारं धार्यमाणं घृतं प्राशयति। भूर्ऋच-
स्त्वयि जुहोमि स्वाहा॥ भुवो यजूंषि त्वयि जुहोमि
स्वाहा॥ सुवः सामानि त्वयि जुहोमि स्वाहा॥ भूर्भुवः
सुवरथर्वाङ्गिरसस्त्वयि जुहोमि स्वाहा॥ इति। ९।
अथैनमुष्णशीताभिरद्भिः स्नापयति।
क्षेत्रियै त्वा निर्ऋत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात्।
अनागसं ब्रह्मणे त्वा करोमि शिवे ते द्यावापृथिवी उभे इमे॥
शं ते अग्निः सहाद्भिरस्तु शं द्यावापृथिवी सहौषधीभिः।
शमन्तरिक्षं सह वातेन ते शं ते चतस्रः प्रदिशो भवन्तु॥
सूर्यमृतं तमसो ग्राह्या यद्देवा अमुञ्चन्नसृजन्व्येनसः।
एवमहमिमं क्षेत्रियाज्जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पा-
शात्॥ इति। १०।
अथैनं मातुरुपस्थ आदधाति। ११। ॥ ३॥

---

II, 3, 8 सुसीमे C s m E F । तस्यामृतस्य D । तथामृतत्वस्य नो धेहि मा॰ F तस्यामृतस्येशानो धेहि मा॰ D

II 3, 9 धार्यमाण F । °रस. स्त्वयि F

II 3, 10 F om इमम्। D gives only the pratikas of the mantras क्षेत्रियै॰, thus also Āp M II, 12 6, Baudh II, 1 and 7, Ś Br 2,5 1 1, but Ath V II, 10,1 gives क्षेत्रियात्त्वा निर्ऋत्या। वरुणस्य पा॰ F । °क्षेत्रिया F

या दैवीश्चतस्रः प्रदिशो वातपत्नीरभि सूर्यो विचष्टे ।
तासां त्वा जरस आदधामि प्र यक्ष्म एतु निर्ऋतिं पराचैः ॥
इति । १ ।
आधायाभिमन्त्रयते ।
मा ते पुत्रं रक्षो हिंसीन्मा धेनुरतिसारिणी ।
प्रिया धनस्य भूया एधमाना स्वे वशे ॥ इति । २ ।
प्रक्षाल्य दक्षिणं स्तनमाधापयति ।
अयं कुमारो जरां धयतु सर्वमायुरेतु ।
तस्मै स्तनं प्रप्यायस्वायुः कीर्तिर्वर्चो यशो बलम् ॥ इति । ३ ।
एवमुत्तरम् । ४ ।
नामयति न रुदति यत्र वयं वदामो यत्र चाभिमृशामसि ॥
इत्युभावभिमृश्यायास्यै शिरस्त उदकुम्भमपिहितं निदधाति ।
आपो गृहेषु जाग्रत यथा देवेषु जाग्रथ ।
एवमस्यै सुपुत्रायै जाग्रत ॥ इति । ५ ।
द्वादश्यां मातापुत्रौ स्नातः । ६ ।
शुच्यगारं कुर्वन्ति । ७ ।
उपनिर्हरन्ति सूतिकाग्निमतिहरन्त्यौपासनम् । ८ ।

---

II 4 1 D has only the pratika । निर्ऋतिं thus also Ap M II 12 8 and T Br 2 5 6 2 but Ath V II 10 5 has निर्ऋतिं, which is a better reading

II 4 2 हिंसीन्मा F । एधमाना C । स्वधया इति E । स्वे वशे Ap M II 13 1

II 4 3 कीर्तिर्वर्चो F

II 4 5 इत्युभौ अभिमृश्यायास्यै E । जाग्रत instead of जाग्रथ E Read जाग्रत and जाग्रथ ।

II 4 8 ०चमन F

तमग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा । धाता ददातु नो रयिम् ॥ इति द्वादशाहुतीर्जुहोति । चयोदशेत्येकेषाम् । ९ ।

इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोत्यरीरिचम् ॥ इति च । अग्नेके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा पुत्रस्य नाम दध्याद्द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं यत्र वा स्वित्युपसर्गः स्यात् । तद्धि प्रतिष्ठितमिति विज्ञायते । १० ।

पिता मातेत्यग्रेभिव्याहरेयाताम् । विज्ञायते च मम नाम प्रथमं जातवेद इति । ११ ।

द्वे नामनी कुर्यात् । विज्ञायते च तस्माद्द्विनामा ब्राह्मणोर्धुक इति । १२ ।

नक्षत्रनाम द्वितीयं स्यादन्यतरद्गुह्यं स्यात् । १३ ।

अन्यतरेणैनमामन्त्रयीरन् । १४ ।

सोमयाजी तृतीयं नाम कुर्वीतेति विज्ञायते । १५ ।

---

II, 4, 9 D om तम् । T S 3, 3, 11, 2—5 । इति चतस्रो धात्रीर्जु E

II, 4, 10 See above I, 3, 5 । दध्याद्व्यक्षरं E । °निष्ठाना° C s m । स्त्वित्यु° E

II, 4, 11 °जातवेद इति F

II, 4, 12 °णार्धुक F

II, 4, 13 °रद्गुह्य F

II, 4, 14 °मन्त्रयेरन् F C p m

II, 4, 15 °याजीति तृतीय C E.

प्रवासादेत्यागतं वा पुत्रमभिमृशति। सोमस्य त्वा द्युम्नेना-
भिमृशाम्यग्नेस्तेजसा सूर्यस्य वर्चसा॥ इति। १६।
पशूनां त्वा हुंकारेणाभिजिघ्राम्यसावायुषे वर्चसे हुम्॥ इति
मूर्धन्यभिजिघ्रेत्। १७।
अथास्य दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति।
अग्निरायुष्मान्॥ इति पञ्चभिः पर्यायैः। १८।
आयुष्टे विश्वतो दधत्॥ इति दक्षिणे कर्णे जपति यथा
पुरस्तात्। १९। ॥ ४ ॥

---

अथ षष्ठे मास्यन्नप्राशनम्। १।
आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्निमुपसमाधाय व्याहृतिपर्यन्तं
कृत्वा जुहोति। इमं मे वरुण॥ तत्त्वा यामि॥ त्वं नो
अग्ने॥ स त्वं नो अग्ने॥ त्वमग्ने अयासि॥ प्रजापते॥
यदस्य कर्मणोऽत्यरीरिचम्॥ इति च। अत्रैके जयाभ्या-
तानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात्। ब्राह्मणा-
नन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयि-
त्वाथैनं दधि मधु घृतमिति त्रिवृत्प्राशयति। भूस्त्वयि
दधामि भुवस्त्वयि दधामि सुवस्त्वयि दधामि॥ इति। २।
अथैनमन्नं प्राशयति। अपां त्वौषधीनां रसं प्राशयामि

---

II 4 16 मृशामाने E भिपिघाम्याने E
II 4 17 मूर्न्यभि F मूर्ध्नमभि F
II 4 19 See above I 5 16—I 3; D joins this sutra with the preceding
II 5 2 See I 3 5; D om the last इति।
II 5 3 रसं F

शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयो भवन्तु ॥ इति । ३ । ॥ ५ ॥

---

तृतीये वर्षे चूडाकर्म । १ ।

आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा जुहोति । इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥ यदस्य कर्मणोऽत्यरीरिचम् ॥ इति च । अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वापरेणाग्निं प्राङ्मुखः कुमार उपविशति । २ ।

उत्तरतो माता ब्रह्मचारी वानडुहं शकृत्पिण्डं धारयति । ३ ।

तेनास्य केशान्प्रतिगृह्णाति । ४ ।

अथोष्णशीता आपः संसृजति । ५ ।

शीतासूष्णा आनीय । आप उन्दन्तु जीवसे ॥ इति दक्षिणं गोदानमुनत्ति । ६ ।

ओषधे त्रायस्वैनम् ॥ इत्यूर्ध्वाग्रामोषधिमन्तर्दधाति । ७ ।

स्वधिते मैनं हिंसीः ॥ इति क्षुरेणाभिनिदधाति । ८ ।

देवश्रूरेतानि प्रवपे ॥ इति प्रवपति । ९ ।

---

II [illegible] F [illegible] आप । आपधोव F

II [illegible] I 3 5

II [illegible] त्वमिद् F

II [illegible] अयाभ्यातानों F । समश्नसि F

II [illegible] आनीया उन्दन्तु F । T S 1, 2 1 1

II [illegible] D [illegible] sutras [illegible] [illegible] tary of [illegible] [illegible] above

एवमितराभ्यदक्षिणम्।
येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्।
तेन ब्रह्माणो वपतेदमस्य ऊर्जेमं रय्या वर्चसा संसृजाथ॥
इति पश्चात्।
येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत्। तेन तेहं वपाम्यसौ॥ इत्युत्तरतः।
यथा ज्योक्सुमना असत्। ज्योक् च सूर्यं दृशे॥ इति पुरस्तात्। १०।
उप्त्वा यथोचितं चूडाः कारयति यथर्षि वा। ११।
संयम्य केशान्।
यत्र पूषा बृहस्पतिः सविता सोमो अग्निः।
तेभ्यो निधानं बहुधा व्यैच्छन्नन्तरा द्यावापृथवी अपः सुवः॥
इति गोष्ठ उदुम्बरे दर्भस्तम्बे वा निखनति योस्य रातिर्भवति। १२।
यथाश्रद्धं ब्राह्मणाय ददाति। १३।
सर्पिष्मन्तमोदनं नापिताय। १४।
एवं विहितं षोडशे वर्षे गोदानकर्म। १५।
सशिखं वापयते। १६।

---

II, 6, 10 °सम्योर्जेम C F I ; ज्योक्सुमना E ; D gives only the pratika of the first mantra

II, 6, 11. वप्त्वा C F ; यथोदितं C D E यथादितं E, see the comm ; कूडाः L ; कारयति all MSS but see the comm

II, 6, 12 D gives only the pratika of the mantra

II, 6, 13 D gives only the pratika

II, 6, 15 षोडशवर्षे E.

II, 6, 16 वापयति C ∗ m

शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओष-
धयो भवन्तु ॥ इति । ३ । ॥ ५ ॥

---

तृतीये वर्षे चूडाकर्म । १ ।

आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्निमुपसमाधाय व्याहृतिपर्यन्तं
कृत्वा जुहोति । इमं मे वरुण ॥ तत्त्वा यामि ॥ त्वं नो
अग्ने ॥ स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥
यदस्य कर्मणोऽत्यरीरिचम् ॥ इति च । अत्रैके जयाभ्या-
तानान्राष्ट्रभृत इत्युपजुह्वति यथा पुरस्तात् । ब्राह्मणा-
नन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयि-
त्वापरेणाग्निं प्राङ्मुखः कुमार उपविशति । २ ।

टेकश्च ससरमटङ्कश्च तूलश्च वितूलश्चार्जुनश्च लोहितश्च।
उत्सृज त्वं शिशिम त्वं पिशंक रोहितः॥
अमी ये के सरस्यका अवधावति तृतीयस्यामितो दिवि।
छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर॥
दूत्या ह नाम वो माता मण्डाकको ह वः पिता।
छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर॥
दुला ह नाम वो माता मण्डाकको ह वः पिता।
छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर॥
समश्चा वृषणः पदो न सीसरिदतः।
छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर॥
संतक्षा हन्ति चक्रिणो न सीसरिदतः।
छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर॥ इति।२।
अथाह। वरं वृणीष्व॥ इति।३।
कुमारमेवाहं वरं वृणे॥ इति।४।
एवं समुपसृते चिरन्हः प्रातर्मध्यंदिने सायं च कुर्याद्यदि चागतः स्यात्।५। ॥७॥

द्वितीयः पटलः

II, 7, 2 टकश्च D। F om वितूलश्च। E om शिशिम त्व। Perhaps शिशिभु to be read। पिशक॰ F पिंगरा रोहितः Bhar II, 8, ॰हत C E F, perhaps पिशङ्ग रोहित to be read। समी D। एके C D Bhar II, 8। Read अवधावन्ति with Ap M II, 16, 7। दिव Bhar II, 7, but II, 8 दिवि। छदर्देहि D। सीसराय नमस्ते अस्तु सीसरे दूत्यु ह F। मात म॰ D। मडाकको D मंडालको F। छदयेहि D। सीरः F। मंडालको E मन्याकको Ap M II, 16, 8। सीमर॰ F। The mantra beginning with दुला ह is omitted in D। समश्चा वृषण प॰ D वृषणः पादो न E। सीसरेदत्त छन्द॰ D। सीसरीदत्तः छन्द॰ D। सारम॥ इति F

II, 7, 3 अथातः D

II, 7, 5 समुपसृजते C E F। F om स्यात।

टेकश्च ससरमटङ्कश्च तूलश्च वितूलश्चार्जुनश्च लोहितश्च ।
उत्सृज त्वं शितिम्न त्वं पिशंक रोहितः ॥
अमी ये के सरस्यका अवधावति तृतीयस्यामितो दिवि ।
छद्पेहि सीसरम सारमेय नमस्ते अस्तु सीसर ॥
दूल्या ह नाम वो माता मण्डाक्को ह वः पिता ।
छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर ॥
दुला ह नाम वो माता मण्डाक्को ह वः पिता ।
छद्पेहि सीसरम सारमेय नमस्ते अस्तु सीसर ॥
समश्चा वृषणः पदो न सीसरिदतः ।
छद्पेहि सीसरम सारमेय नमस्ते अस्तु सीसर ॥
संतक्षा हन्ति चक्रिणो न सीसरिदतः ।
छद्पेहि सीसरम सारमेय नमस्ते अस्तु सीसर ॥ इति । २ ।
अथाह । वरं वृणीष्व ॥ इति । ३ ।
कुमारमेवाहं वरं वृणे ॥ इति । ४ ।
एवं समुपसृते चिरन्हः प्रातर्मध्यंदिने सायं च कुर्याद्यदि चागतः स्यात् । ५ । ॥ ७ ॥

द्वितीयः पटलः

II, 7, 2 टकश्च D । F om वितूलश्च । E om शितिम्न त्व । Perhaps शितिम्र to be read । पिशक° F पिशग रोहित Bhar II 8, °हल C F F, perhaps पिशङ्ग रोहित to be read । समी D । एके C D Bhar II, 8 । Read अव-धावन्ति with Ap M II, 16, 7 । दिव Bhar II, 7, but II, 8 दिवि । छदद्पेहि D । सीसराय नमस्ते अस्तु सीसरे दूलु ह F । मात म° D । मण्डाकको D मण्डातकी E । छदर्पेहि D । सीर. F । मण्डातको E मन्याकको Ap M II, 16 8 । सीसर F । The mantra beginning with दुला ह is omitted in D । समश्चा वृषण प° D वृषण. पादो न F । सीसरिदस छद्द° D । सीसरीदत्त छद्द° D । सारम ॥ इति F

II, 7, 3 अथह D

II, 7 5 समुपसृते C E F । F om स्यात ।

अथातः शूलगवम् । १ ।

आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽग्निमुपसमाधाय संपरिस्तीर्य पयसि स्थालीपाकं श्रपयित्वाभिघार्योद्वास्यापरेणाग्निं द्वे कुटी कृत्वा दक्षिणस्यां शूलगवमावाहयति ।

आ त्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः ।
वाताजिरैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम्॥ इति । २ ।

उत्तरस्यां मीढुषीम् । ३ ।

मध्ये जयन्तम् । ४ ।

यथोढमुदकानि प्रदायोपस्तीर्णाभिघारितांस्त्रीनोदनान्कल्पयित्वा यथोढमेवोपस्पर्शयति । उपस्पृशतु मीढ्वान्मीढुषे स्वाहा ॥ उपस्पृशतु मीढुषी मीढुष्यै स्वाहा ॥ जयन्त उपस्पृशतु जयन्ताय स्वाहा ॥ इति । ५ ।

व्याहृतिपर्यन्तं कृत्वौदनानभ्याहृत्य जुहोति । भवाय देवाय स्वाहा ॥ रुद्राय देवाय स्वाहा ॥ शर्वाय देवाय स्वाहा ॥ ईशानाय देवाय स्वाहा ॥ पशुपतये देवाय स्वाहा ॥ उग्राय देवाय स्वाहा ॥ भीमाय देवाय स्वाहा ॥ महते देवाय स्वाहा ॥ इति । ६ ।

अथ पत्न्योदनस्य पत्न्यै जुहोति । भवस्य देवस्य पत्न्यै स्वाहा॥

[illegible]

रुद्रस्य देवस्य पत्न्यै स्वाहा ॥ शर्वस्य देवस्य पत्न्यै स्वाहा ॥ ईशानस्य देवस्य पत्न्यै स्वाहा ॥ पशुपतेर्देवस्य पत्न्यै स्वाहा ॥ उग्रस्य देवस्य पत्न्यै स्वाहा ॥ भीमस्य देवस्य पत्न्यै स्वाहा ॥ महतो देवस्य पत्न्यै स्वाहा ॥ इति । ७ ।

अथ मध्यमौदनस्य जुहोति । जयन्ताय स्वाहा ॥ जयन्ताय स्वाहा ॥ इति । ८ ।

अथ सर्वेभ्य ओदनेभ्यः समवदाय सौविष्टकृतं जुहोति । अग्नये स्विष्टकृते स्वाहा ॥ इति । ९ ।

अभित एतमग्निं गा स्थापयन्ति यथा हूयमानस्य गन्धमाजिघ्रेयुः । १० ।

स्वस्ति नः पूर्णमुखं परिक्रामन्तु ॥ इति सर्वतः प्रदक्षिणं परिक्रम्य ।

नमस्ते रुद्र मन्यवे ॥ इत्येतैरनुवाकैरुपतिष्ठते प्रथमोत्तमाभ्यां वा । ११ । ॥ ८ ॥

---

अथातो बौद्ध्यविहार एव । १ ।

गृहपोपस्पृश गृहपाय स्वाहा ॥ गृहप्युपस्पृश गृहप्यै स्वाहा ॥ द्वारपोपस्पृश द्वारपाय स्वाहा ॥ द्वारप्युपस्पृश द्वारप्यै

---

II, 8, 7 °पतिर्देवस्य F । स्वाहेमिमस्य F

II, 8, 8 मध्यमौदनस्य D । E om one जयन्ताय स्वाहा ॥

II, 8, 10 अभित I । एथाग्नि E । स्थापयति C s m

II, 8, 11 पूर्णमुख D Āp M II, 18, 12 gives स्वस्ति न पूर्णमुख परिक्रामतु । T S 1, 5, 1—11

II, 9, 1 बौद्ध्य F C p m (?)

II, 9, 2 गृहप्युप D । गृहप्ये D गृहाये E । °पस्पृश्य द्वारप्ये D

स्वाहा ॥ इति चत्वारि पलाशानि ददाति । घोषिण उपस्पृशत घोषिभ्यः स्वाहा ॥ निषङ्गिण उपस्पृशत निषङ्गिभ्यः स्वाहा ॥ अन्वासारिण उपस्पृशतान्वासारिभ्यः स्वाहा ॥ प्रयुन्वन्त उपस्पृशत प्रयुन्वद्भ्यः स्वाहा ॥ विचिन्वन्त उपस्पृशत विचिन्वद्भ्यः स्वाहा ॥ समश्नन्त उपस्पृशत समश्नद्भ्यः स्वाहा ॥ इति । २ ।

दशाथापराणि । देवसेना उपस्पृशत देवसेनाभ्यः स्वाहा ॥ इति । ३ ।

दशैवाथापराणि । या आख्याता देवसेना याश्चानाख्याता उपस्पृशत ताभ्यः स्वाहा ॥ इति । ४ ।

अथ पर्णपुटं कृत्वा तस्मिन्नुपस्तीर्णाभिघारितमोदनपिण्डमवदाय परोगव्यूति गत्वा वृक्ष आसजति । निषङ्गिण उपस्पृशत निषङ्गिभ्यः स्वाहा ॥ इति । ५ ।

अथोपतिष्ठते । नमो निषङ्गिण इषुधिमते तस्कराणां पतये ॥ इति । ६ ।

अथ चान्दनसुरोदकाक्षताक्षतगोमयदूर्वास्तम्बोदुम्बरपलाशशमीविकङ्कताश्चत्थेन गोवालेनेति गाः प्रोक्षति वृषाणमेवाग्रे । शिवो भव शिवो भव ॥ इत्यथ शिवो हैव भवति । ७ ।

---

II 9 2 °स्पृश घा F । प्रयुन्वद्भ्य F । विचिन्वद्भ्य F । समश्नद्भ्य F ।
II 9 3 दशैवाथाप° I
II 9 6 तस्कराणां F । D F ins. नमः after पतये । I 9 4 5 6 ।
II 9 7 धन्न D । °ण्मेवा F

अथैनं क्षैत्रपत्यं पयसि स्थालीपाकं श्रपयित्वाभिघार्योद्वास्य गवां मार्गेऽनग्नौ क्षेत्रस्य पतिं यजति । ८ ।

चतुर्षु सप्तसु वा पलाशेषु तं तथैवावाहयति यथा शूलगवम् । ९ ।

नूर्तं यजते । माकी देवः । १० ।

अथोपतिष्ठते । क्षेत्रस्य पतिना वयं॥ क्षेत्रस्य पते॥ इति ।११।

अथैतस्य क्षैत्रपत्यस्य ये सनाभयो भवन्ति ते प्राश्नन्ति यथैवैषां कुलधर्मो भवति । १२ । ॥ ९ ॥

## तृतीयः पटलः

---

अमावास्यायामपराह्णे मासिकमपरपक्षस्य वायुक्ष्वहःसु । १ ।

पितृभ्योन्नं संस्कृत्य दक्षिणाग्रान्दर्भानासनानि कल्पयित्वा ब्राह्मणाञ्छुचीन्मन्त्रवतः समङ्गानयुज आमन्त्रयते योनिगोत्रमन्त्रासंबन्धान् । २ ।

नार्थापेक्षी भोजयेत् । ३ ।

अग्निमुपसमाधाय दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्यैकपवित्रा-

---

II 9 8 F om अथ । क्षैत्रपत्यस्य D F क्षेत्रपत्यस्य C । मध्येनाग्नौ D । क्षेत्रपति C F E

II 9 9 चतुषु D । कपालेषु F । तथैव यास D

II 9, 10 नूर्तेन F । The comm says नूर्तं ओदनम without any further remark on the form Perhaps नूर्तं to be read । D omits this sutra

II, 9 11 क्षेत्रपतिना E । C F om अथ । T S 1 1, 14 2 3

II 10 1 °ष्वहस्सु C

II 10 2 दक्षिणाग्रान्दर्भा° F । °णाञ्छुची° D F E °णाञ्शुची C

II 10 3 F rejects this sutra and inserts after the first भोजयेत the words ब्राह्मणा° °बन्धान of the preceding sutra

न्तर्हितायामाज्यस्याल्यामाज्यं संस्कृत्य प्रसव्यं परिषिच्यौदुम्बरमिध्ममभ्याधायौदुम्बर्या दर्व्या जुहोति। ४।

आज्यभागान्तं कृत्वा प्राचीनावीती पितॄनावाहयति।
आयात पितरः सोम्या गम्भीरः पथिभिः पूर्व्यैः।
प्रजामस्मभ्यं ददतो रयिं च दीर्घायुत्वं च शतशारदं च॥ इति।५।

एतामेव दिशमभ्यपः प्रसिञ्चति।
आपो देवीः प्रहिणुतामिमेतं यज्ञं पितरो नो जुषन्ताम्।
मासीमामूर्जमुत ये भजन्ते ते नो रयिं सर्ववीरं नियच्छन्तु॥
इति। ६।

यज्ञोपवीती व्याहृतिपर्यन्तं कृत्वा प्राचीनावीती जुहोति। सोमाय पितृमते स्वधा नमः॥ यमायाङ्गिरस्वते पितृमते स्वधा नमः॥ याः प्राचीः संभवन्त्याप उत्तरतश्च या अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमः॥ अन्तर्दध ऋतुभिरहोरात्रैः सुसन्धिभिरर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे स्वधा नमः॥ इति। अथ नामधेयैर्जुहोति। अमुष्मै स्वधा नमः॥ अमुष्मै स्वधा नमः॥ इति।

यन्मे माता प्रलुलोभ चरत्यननुव्रता।

---

II 10 5 D joins this sutra with the following but repeats the pratika of 5 6 in the comm

II 10 6 दिशिम D। पर्रिषिञ्चति D। °मुत ये D। नियच्छन्त्विति D • नियच्छन्त्विति C F F

II 10 7 °तो प्राचीनावीतिपर्यन्त F। F ॥ आयात पितर सोम्या गम्भीरं पथिभि पूर्व्यै I for सोमाय। उत्तरत श्च F

तन्मे रेतः पिता वृङ्क्तामाभुरन्योपपद्यताम्। स्वधा नमः ॥
इति। एवं द्वितीयां तथा तृतीयाम्। यन्मे पितामही ॥
यन्मे प्रपितामही ॥ इति मन्त्रं संनमति। ७। ॥ १० ॥

ये चेह पितरो ये च नेह यांश्च विद्म याँ उ च न प्रविद्म।
अग्ने तान्वेत्थ यदि ते जातवेदस्तया प्रत्तं स्वधया मदन्तु।
स्वधा नमः ॥
यद्वः क्रव्यादङ्गमदहल्लोकानयं प्रणयञ्जातवेदाः।
तद्वोहं पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः संभवत पितरः। स्वधा
नमः ॥
वहाज्यं जातवेदः पितृभ्यो यत्रैतान्वेत्थ निहितान्पराके।
आज्यस्य कूल्या उप तान्क्षरन्तु सत्या एषामाशिषः सन्तु
कामैः। स्वधा नमः ॥ इति।
एवं द्वितीयां तथा तृतीयाम्। पितामहेभ्यः ॥ प्रपिताम-
हेभ्यः ॥ इति मन्त्रं संनमति। १।
एवमन्नस्य जुहोति। वहान्नम् ॥ इति मन्त्रं संनमति। २।
अथ सौविष्टकृतीं जुहोति। अग्नये कव्यवाहनाय स्विष्टकृते
स्वधा नमः। इति। ३।
अथान्नमभिमृशति।
पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्रा-
ह्मणानां त्वा प्राणापानयोर्जुहोमि। अक्षितमसि मा

II, 10, 7 वृक्तामा° D वृङ्गामा° C F
II 11, 1 तान्वेत्थ F। °मदन्तो° E। वाहाज्य F। °तान्वेत्थ F
II, 11, 1 ब्राह्मणा° D ब्राह्मणस्य मुखे E। ब्राह्मणा F। F ins विद्मायता
after त्वा। °पानयोर्जु° D

पितृणां क्षेष्ठा अमुत्रामुष्मिँल्लोके। पृथिवी समा त-
स्याग्निरुपद्रष्टा दत्तस्याप्रमादाय॥

पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्म-
णानां त्वा प्राणापानयोर्जुहोमि। अक्षितमसि मा
पितामहानां क्षेष्ठा अमुत्रामुष्मिँल्लोके। अन्तरिक्षं समं
तस्य वायुरुपद्रष्टा दत्तस्याप्रमादाय॥

पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्म-
णानां त्वा प्राणापानयोर्जुहोमि। अक्षितमसि मा
प्रपितामहानां क्षेष्ठा अमुत्रामुष्मिँल्लोके। द्यौः समा
तस्यादित्य उपद्रष्टा दत्तस्याप्रमादाय।

इति ब्राह्मणानुपस्पर्शयति। ४।

प्राणे निविश्यामृतं जुहोमि॥ इति। ५। ॥ ११॥

---

भुञ्जानान्समीक्षते। ब्रह्मणि म आत्मामृतत्वाय॥ इति। १।

भुक्तवतोऽनुव्रज्य शेषमनुज्ञाप्योदकुम्भं दर्भमुष्टिं चादाय द-
क्षिणापूर्वमवान्तरदेशं गत्वा दक्षिणाग्रान्दर्भान्संस्तीर्य
तेष्ववाचीनपाणिर्दक्षिणापवर्गांस्त्रीनुदकाञ्जलीन्निन-
यति। मार्जयन्तां पितरः सोम्यासः॥ मार्जयन्तां पि-

---

II 11 1 पितृणा D C [illegible] । मा दयाना ले° E । ब्राह्मणस्त्वा D । ब्राह्मणा E । पानयाजु° D । ब्राह्मणा E । [illegible] gives [illegible] the pratikas of the [illegible] । °स्पर्शति F

II 11 [illegible] प्राणेनत्रि E Ap II [illegible] Baudh II 17 and T Ar 10 33 give निविश्यामृत ।

II 12 1 भुञ्जाना° F

II 12 [illegible] °मानुव्रज्य F । शेषमषमनु° C । दर्भमुष्टी D । पणिर्द° F । °ञ्जलिम् निन F

तामहाः सोम्यासः ॥ मार्जयन्तां प्रपितामहाः सोम्यासः ॥ इति । असाववनेनिङ्क्ष्वासाववनेनिङ्क्ष्व ॥ इति वा । २ ।

तेष्ववाचीनपाणिर्दक्षिणापवर्गान्पिण्डान्ददाति । एतत्ते ततासौ ॥ इति पित्रे पिण्डं ददाति । एतत्ते पितामहासौ ॥ इति पितामहाय । एतत्ते प्रपितामहासौ ॥ इति प्रपितामहाय तूष्णीं चतुर्थम् । स कृताकृतः । ३ ।

अथ यदि नामधेयानि न विन्द्यात् । स्वधा पितृभ्यः पृथिविषद्भ्यः ॥ इति पित्रे पिण्डं दद्यात् । स्वधा पितृभ्योन्तरिक्षसद्भ्यः ॥ इति पितामहाय । स्वधा पितृभ्यो दिविषद्भ्यः ॥ इति प्रपितामहाय । ४ ।

अत्राञ्जनाभ्यञ्जने वासश्चानुपिण्डं ददाति । ५ ।

आङ्क्ष्वासावाङ्क्ष्वासौ ॥ इति त्रिराञ्जनम् । ६ ।

अभ्यङ्क्ष्वासावभ्यङ्क्ष्वासौ ॥ इति त्रिरभ्यञ्जनम् । ७ ।

एतानि वः पितरो वासांस्यतो नोन्यत्पितरो मा यूढ्वम् ॥ इति दशामूर्णास्तुकान्वा छित्त्वा न्यस्यति पूर्वे वयसि । ८ ।

स्वं लोम च्छित्त्वोत्तरे । ९ ।

अथ पात्रं संक्षाल्य ।

---

II 12, 3 तमो F । प्रपितासौ D

II, 12, 4 श्रथा F । विन्द्यात all MSS and the comm where, however, no remark on the form is made । पृथिवीष॰ F । ददाति D F

II, 12, 6 D joins this sutra with the following but repeats the pratika of the latter in the comm It adds moreover the mantra of 8 S but repeats it in its proper place

II, 12 8 वासांस्यतो नोन्यपि F । D repeats the mantra but finishes it the second time with युद्धम ।

II, 12, 10 अन्यपात्र D

पुचान्पौचानभितर्पयन्तीरापो मधुमतीरिमाः स्वधां पितृभ्यो
अमृतं दुहानाः ।
आपो देवीरुभयांस्तर्पयन्तु नदीरिमा उदन्वतीर्वेतस्विनीः
सुतीर्थ्याः ।
अमुष्मिँल्लोक उप वः क्षरन्तु ॥ इति प्रसव्यं परिषिच्य न्यु-
ब्जपात्रं पाणी व्यत्यस्य दक्षिणमुत्तरमुत्तरं च दक्षिणम्।
नमो वः पितरो रसाय॥ इति नमस्कारैरुपतिष्ठते।१०।
तत उदकान्तं गत्वा चीनुदकाञ्जलीन्निनयति । ११। ॥१२।

---

एष ते तत मधुमाँ ऊर्मिः सरस्वान्यावानग्निश्च पृथिवी च
तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं भूतं
ददामि यथाग्निरक्षितोनुपदस्त एवं मह्यं पित्रेक्षितो-
नुपदस्तः स्वधा भवतां तं स्वधामक्षितं तैः सहोपजी-
वासावृचस्ते महिमा ॥
एष ते पितामह मधुमाँ ऊर्मिः सरस्वान्यावान्वायुश्चान्तरिक्षं
च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं
भूतं ददामि यथा वायुरक्षितोनुपदस्त एवं मह्यं पि-
तामहायाक्षितोनुपदस्तः स्वधा भवतां तं स्वधामक्षितं
तैः सहोपजीवासौ यजूंपि ते महिमा ॥
एष ते प्रपितामह मधुमाँ ऊर्मिः सरस्वान्यावानादित्यश्च
द्यौश्च तावत्यस्य मात्रा तावानस्य महिमा तावन्तमेनं

---

II, 12 10 °स्तर्पयति C E H p m °र्पयत D p m °र्पयतो D s m °र्पयति F 1 T ९ 3 2, 5 5 6 1 °स्कारैर्यत्यामनुप D F
II 13, 1 यथा वायुरक्षितो° instead of यथाग्निर° E

भूतं ददामि यथादित्योक्षितोनुपदस्त एवं मह्यं प्रपितामहायाक्षितोनुपदस्तः स्वधा भवतां त स्वधामक्षितं तैः सहोपजीवासौ सामानि ते महिमा ॥ इति । १ ।
प्रत्येत्य प्रतिष्ठितमुदपात्रेणोपप्रवर्तयति ।
परायात पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः ।
अथ मासि पुनरायात नो गृहान्हविरत्तुं सुप्रजसः सुवीराः ॥ इति । २ ।
एतेन माध्यावर्षं व्याख्यातम् । ३ ।
तत्र मांसं नियतम् । ४ ।
मांसाभावे शाकम् । ५ । ॥ १३ ॥

चतुर्थः पटलः

अष्टकां व्याख्यास्यामः । १ ।
माघ्याः पौर्णमास्या योपरपक्षस्तस्याष्टमीमेकाष्टकेत्याचक्षते । २ ।
ततः पूर्वेद्युरनूराधेष्वपराह्णेग्निमुपसमाधाय दक्षिणाप्राग्यैर्दर्भैः परिस्तीर्यैकपवित्रान्तर्हितानि चत्वारि व्रीहिशरावाणि निर्वपति । इममपूपं चतुःशरावं निर्वपामि क्लेशावहं पितृणा सांपराये देवेन सवित्रा प्रसूतः । देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां

II 13 2 E om पितर । D om मासि ।
II 13 3 माध्या° E F
II 13 4 अत्र F
II 14 3 °रनुराधष्व° C रनूराधेष्वप D । सुपासामा C । निर्वपयाति D । Probably क्लेशापहं to be read

पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो वो जुष्टं निर्व-
पामि ॥ इति । ३ ।

एतेनैव पवित्रेण तूष्णीं प्रोक्षणीः संस्कृत्य तूष्णीं प्रोक्ष्य
तूष्णीमवहत्य यथापुरोडाशमेवं चतुर्षु कपालेषु तूष्णीं
श्रपयित्वाभिघार्योद्वास्य प्रसव्यं परिषिच्यौदुम्बरमिध्म-
मभ्याधायौदुम्बर्या दर्व्योपस्तीर्णाभिघारितं दक्षिणाप्रा-
चीसंततं परंपरमवदाय दक्षिणाप्राचीसंततं परंपरं जु-
होति ।

उलूखला ग्रावाणो घोषमक्रत हविः कृण्वन्तः परिवत्सरी-
णाम् ।

एकाष्टके सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ।
स्वधा नमः ॥

अपूपं देव घृतवन्तमग्ने स्वधावन्तं पितॄणां तर्पणाय ।
यथातथं वह हव्यमग्ने पुत्रः पितृभ्य आहुतिं जुहोमि ।
स्वधा नमः ॥

अयं चतुःशरावो घृतवानपूपः पयस्वानग्ने रयिमान्पुष्टिमांश्च ।
प्रतिनन्दन्तु पितरः संविदानाः स्विष्टोयं सुहुतो ममास्तु ।
स्वधा नमः ॥ इति । ४ ।

अथान्नस्य जुहोति । इयमेव सा या प्रथमा व्यौच्छत् ॥ एका-
ष्टका तपसा तप्यमाना ॥ या प्रथमा व्यौच्छत् ॥ इति । ५ ।

---

II 14 [illegible] पवित्र D । प्रोक्षिण [illegible] । परंपरं जु [illegible] । उलूखला D F । कृण्वत D F । F om परिवत्सरीणाम [illegible] । परिवत्सरीणां [illegible] II 2 [illegible] III 10 5 [illegible] परिवत्सरीय । स्वधा [illegible] । पितृणा D । रयिमान्पु [illegible] । स्विष्टाय सुहुतो D
II 14 [illegible] यथ [illegible]

अपूपस्यान्नस्येति समवदाय सर्पिर्मिश्रस्य जुहोति। अग्नये
कव्यवाहनाय स्विष्टकृते स्वधा नमः॥ इति। ६।
तं घृतवन्तं मधुमन्तमन्नवन्तं श्राद्धाभिमर्शनेनाभिमृश्य पि-
ण्डानामावृता पिण्डान्ददाति। ७।
तेन ब्राह्मणान्विद्यावतः परिवेवेष्टि। ८।
तेभ्यो यथाश्रद्धमन्नं धनं च ददाति। ९।
प्रसिद्धमोदकाञ्जलिदानाद्यथा मासिके। १०।॥ १४॥

श्वोभूते पितृभ्यो गामालभते। १।
अग्निमुपसमाधाय दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्य।
इमां पितृभ्यो गामुपाकरोमि तां मे समेताः पितरो जुषन्ताम्।
मेदस्वतीं घृतवतीं स्वधावतीं सा मे पितॄन्सांपराये धि-
नोतु। स्वधा नमः॥
इत्युपाकरणीयां हुत्वैकेन बर्हिषैकशूलया च वपाश्रपण्यौद्-
र्व्योपाकरोति। पितृभ्यस्त्वा जुष्टामुपाकरोमि॥ इति।२।
अथैनां प्रोक्षति। पितृभ्यस्त्वा जुष्टां प्रोक्षामि॥ इति। ३।

---

II 14 7 श्राद्धाभिमर्शेना D । See II 11 4 । °मावृतान् पि D ।
See II 12 2—10
II 14 8 °श्चावत F F
II 14 10 प्रसिद्धमुद° D । See II 11 1—13 1
II 15 2 ता मे D । पितृन्सा° C । °करणीय C E F । °श्रपण्याद्° D । जु
ष्टमुपा D, Bl or II 11
II 15 3 D has उपाकरोमि instead of प्रोक्षति । जुष्ट all MSS except
H and G (cont.)

तां प्रोक्षितां पर्यग्नि कृत्वा तामपरेणाग्निं प्रत्यक्शिरसं दक्षिणापदीं संज्ञपयन्ति । ४ ।

संज्ञप्तायै तूष्णीमद्भिः प्राणानाप्याय्य तूष्णीं वपां हृदयं मतस्ने उद्धरति । ५ ।

औदुम्बर्या वपाश्रपण्या वपां श्रपयत्यौदुम्बरेषु शूलेषु पृथगितराणि । ६ ।

श्रपयित्वाभिघार्योद्वास्य प्रसव्यं परिषिच्यौदुम्बरमिध्ममभ्याधायौदुम्बर्या दर्व्योपस्तीर्णाभिघारितां वपां जुहोति ।

वह वपां जातवेदः पितृभ्यो यत्रैतान्वेत्थ निहितान्पराके ।
मेदसः कूल्या उप तान्क्षरन्तु सत्या एषामाशिषः सन्तु कामैः ।
स्वधा नमः ॥ इति । ७ ।

सर्वहुतां वपां जुहोति शेषमुत्कृष्य ब्राह्मणान्भोजयेत् । ८ ।

उपस्थितेऽन्न ओदनस्य मांसानामिति समवदाय सर्पिर्मिश्रस्य जुहोति ।

एकाष्टकां पश्यत दोहमानामन्नं मांसवद्घृतवत्स्वधावत् ।
तद्ब्राह्मणैरतिपूतमन्नंतमक्षितं तन्मे अस्तु स्वधा नमः ॥
एकाष्टका तपसा तप्यमाना संवत्सरस्य पत्नी दुदुहे प्रपीना ।

---

II, 15, 4 प्रोक्ष्यंति प॰ D । दक्षिणास्यद्रीनिस॰ D दक्षिणपद्री C
II, 15, 5 उद्धर । D
II, 15, 6 G begins a new sutra with औदुम्बरेषु ।
II, 15, 7 जातवेद पि॰ F । ॰ताग्येत्थ F । मेदस कू॰ F
II, 15, 8 शेष उत्क॰ E शेषमुपाकृत्य C D
II, 15, 9 पश्यति F ॰का पश्यति D ॰का सपयस F । ॰मवमास॰ D । मे ब्राह्मणैर्यतिपूतमस्त॰ D । According to Âp M II, 20, 33 ॰पूतमन्नंतमद्यम and Bhar II, 17 ॰पूत पुनतमद्यम॰ the correct reading was 'पूतमन्नमस्य क्षितम् । प्रपीना F

तं दोहमुपजीवाथ पितरः संविदानाः स्विष्टोयं सुहुतो म-
मास्तु । स्वधा नमः ॥
संवत्सरस्य प्रतिमाम् ॥ इति । ९ ।
हुत्वान्नस्य मांसानामिति समवदाय सर्पिर्मिश्रस्य जुहोति ।
अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः ॥ इति । १० ।
प्रसिद्धमोदकाञ्जलिदानाद्यथा मासिके । ११ ।
अन्नधनदाने त्वचानियते । १२ ।
श्वोभूते मांसशेषेण पितृभ्योन्नं संस्कृत्य । त्वमग्ने अयासि ॥
प्रजापते ॥ इति जुहोति । १३ ।
प्रसिद्धमोदकाञ्जलिदानाद्यथा मासिके । १४ । ॥ १५ ॥

## पञ्चमः पटलः

अथातः श्रवणाकर्म । १ ।
तद्या पौर्णमासी श्रवणेन युज्यात्तस्यामुपरिष्टात्सायमग्नि-
होत्रस्य दक्षिणाग्निमुपसमादधात्यौपासनमनाहिताग्निः
। २ ।
अथोपकल्पयतेक्षतधाना अक्षतलाजान्सक्तून्किंशुकान्याञ्ज-
नाभ्यञ्जने आज्यमिति । ३ ।

II 15 9 T S 5 7 2 1
II 15 10 हुत्वा श्र F । °वाहना स्वि F
II 15 11 °ञ्जलिना यथा D । S II 14 4—13 1
II 15 12 °धनदाने त्व F
II 15 14 प्रसिद्धमुद D । मासिके इति D । See II 14 1—13 1 ।
B D make this sutra belong to the preceding portion of the co
II 16 2 युज्यात्ता° D F युंज्यातत्रामुप° F । °मुपरिष्टात्सा D । °हिताग्ने
all MSS but see the comm
II 16 3 D om अक्षतधाना । अक्षतान्ना° F F । °शुकान्यञ्जना° D F C
P m । आज्यामिति C

दर्व्यामुपस्तीर्यैतेषामेवान्नानां समवदाय सर्पिर्मिश्रस्य जुहोति। नमोऽग्नये पार्थिवाय पार्थिवानामधिपतये स्वाहा॥ नमो वायवे विभुमत आन्तरिक्षाणामधिपतये स्वाहा॥ नमः सूर्याय रोहिताय दिव्यानामधिपतये स्वाहा॥ नमो विष्णवे गौराय दिश्यानामधिपतये स्वाहा॥ इति। ४।

किंशुकान्याज्येन संयुज्य जुहोति।
जग्धो मशको जग्धा विचष्टिर्जग्धो व्यध्वरः॥
जग्धो व्यध्वरो जग्धा विचष्टिर्जग्धो मशकः॥
जग्धा विचष्टिर्जग्धो मशको जग्धो व्यध्वरः॥ इति। ५।

उदकुम्भं दर्भमुष्टिं चादाय प्राङ्मुखो निष्क्रम्य प्राचो दर्भान्संस्तीर्य तेषु चतुरो बलीन्हरति। ये पार्थिवाः सर्पास्तेभ्य इमं बलिं हरामि॥ य आन्तरिक्षाः॥ ये दिव्याः॥ ये दिश्याः॥ इति। ६।

अथाञ्जनाभ्यञ्जने दत्त्वोपतिष्ठते। नमो अस्तु सर्पेभ्यः॥ इत्येतैर्मन्त्रैः। ७।

---

II, 16, 4. °मेव सावाना D; विभूमत F.

II, 16, 5. Perhaps the following is to be restored:

ज॰ म॰ ज॰ वि॰ ज॰ व्य॰ ॥
ज॰ व्य॰ ज॰ म॰ ज॰ वि॰ ॥
ज॰ वि॰ ज॰ व्य॰ ज॰ म॰ ॥

which is given by [illegible] M. II, 16, 15—17. Instead of विचष्टि Āp. has विनृष्टि. D has instead of the last ज॰ व्य॰ जग्धा विचष्टिर्जग्धा मशका जग्धो व्यध्वर।

II, 16, 6. प्रत्यङ्मुखो F; प्राचो D F, but the comm. makes no remark on the form; °भ्य इमं ब॰ D; आन्तरिक्षा॰ F; D om. ये दिव्या; दिश्या य इमं F.

II, 16, 7. Cf. 8, 1, 2; 5, 3. D joins this sūtra with the following but repeats the pratīka of the latter in the comm.

उदकुम्भमादाय त्रिः प्रदक्षिणमावसथं परिषिञ्चन्परिक्रामे-
द्यावता कामयेतैतावता मे सर्पा नावक्रामेयुरिति ।
अप श्वेत पदा जहि पूर्वेण चापरेण च ।
सप्त च मानुषीरिमास्तिस्रश्च राजबन्धवैः ।
न वै श्वेतस्याभ्याचरेणाहिर्जघान कं चन ॥
श्वेताय वैदर्वाय नमो नमः श्वेताय वैदर्वाय ॥ इति । ८ ।
अथोपतिष्ठते । समीची नामासि प्राची दिक् ॥ इत्येतैर्मन्त्रैः
प्रतिदिशम् । ९ ।
नित्यमत ऊर्ध्वं बलिं हरत्या मार्गशीर्ष्याः । १० ।
नात्र किंशुकहोमः । ११ ।
न परिषेचनं विद्यते । १२ ।
निरवदास्यन्निरवदास्यन् ॥ इत्यन्ततो बलीन्हरति । १३ । ॥ १६ ॥

## षष्ठः पटलः

---

आग्रहायणीं व्याख्यास्यामः । १ ।
मार्गशीर्ष्यां पौर्णमास्यामग्निमुपसमाधाय संपरिस्तीर्य पय-

---

II 16 8 पूरिषिञ्च D । °यता मम समीपे सर्पा ना D 8 1 । D has हिं instead of जहि । चापरया । D । सास्तमथ्य F 8 11 । बान्धवै P r II 11 4 Sankh IV 18 1 but Ap M II 17 27 °बन्धवीं and Asv II 3 3 °बान्धवीं which is a letter read g M II 7 h 8 °बान्धवा Bhar II 1 बन्धवै । न वै श्वे C । णाहिस्तजघान D । Read °भ्याचारहिर्जघान which can be guessed from अभ्याचारे Ap M II 1 75 Hir II 14 5 अभ्याचरे M n II 7 अभ्यागारे Asv II 3 3
II 16 9 T S 5 10 1—2
II 16 10 गैर्शीर्ष्यांत D
II 17 2 मार्गशीर्ष्यां पार्णमास्याग्निमु° D

सि स्थालीपाकं श्रपयित्वाभिघार्योद्वास्य व्याहृतिपर्यन्तं
कृत्वा जुहोति ।

इडायै सृप्तं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व ।
ये याम्याः पशवो विश्वरूपास्तेषां सप्तानामिह रन्तिरस्तु
पुष्टिः । स्वाहा ॥
यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली । स्वाहा ॥
शिवा पशुभ्यो दारेभ्यः शिवा नक्तं शिवा दिवा ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली । स्वाहा ॥
पौर्णमासी पूरयन्त्यायान्त्यपरापरान् ।
मासार्धमासान्विभजन्ति सा नः पूर्णाभिरक्षतु । स्वाहा ॥
इति । २ ।

अथ सौविष्टकृतीं जुहोति ।
स्विष्टमग्ने अभि तत्पृणाहि विश्वा देव पृतना अभिष्य ।
उरुं नः पन्थां प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरं न आयुः ॥
इति । ३ ।

ततः पाणी प्रक्षाल्य भूमिमालभते ।
प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु ।
प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन्प्रति प्राणेषु प्रतितिष्ठामि पुष्टे ।
प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे ॥

---

II 17 2 Instead of इडायै सृप्तं Bhar II 2 has इडाया पद । सृप्तं corresponds to सरीसृपं of the verse इडायास्पदं घृतवत्सरीसृपं जातवेद प्रति हव्या गृभाय Ath V III 10 6 Gobh M II 2 11 । संवत्सरस्य पत्नी the second time F । विभजन्ति C D

II 17 3 C F E o अथ । अभिष्या D । उरुं F । न E F । m

त्रया देवा एकादश त्रयस्त्रिंशाः सुराधसः।
बृहस्पतिपुरोहिता देवस्य सवितुः सवे। देवा देवैरवन्तु मा॥
इति। ४।
तेषां दक्षिणा गृहपतिरुपविशति। ५।
उत्तरा उत्तरे। ६।
प्रजोत्पत्त्यानुपूर्व्येण। ७।
तेषां ये मन्त्रविदस्ते मन्त्राञ्जपन्ति। ८।
स्योना पृथिवि भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः॥
बडित्था पर्वतानाम्॥ इति द्वाभ्यां दक्षिणैः पार्श्वैः संवि-
शन्ति। ९।
उदायुषा॥ इत्युत्तिष्ठन्ति। १०।
उदस्यामामृता अभूम॥ इत्युत्थाय जपन्ति। ११।
एवं रात्रेस्तिस्रः संजिहते। १२।
ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वा-
चयित्वाथैतां रात्रिं वसन्ति। १३। ॥ १७॥

सप्तमः पटलः

---

II 17, 7 °नुपूर्व्येण F D C ॰ m
II 17 8 E rejects मन्त्रविदस्ते।
II 17 9 भवान्° C। Read सप्रथ। T S ?, 2 12 2
II, 17 10 T S 1 ? 8 1। °त्तिष्ठति D
II 17 11 उदस्यानममृता D उदस्याममृता C p m। इत्युथ्याय E।
जपति D
II, 17, 13 वसति D भवन्ति E

अथात उपाकरणोत्सर्जने व्याख्यास्यामः । १ ।

श्रवणापक्ष ओषधीषु जातासु हस्तेन पौर्णमास्यां वाध्यायोपाकर्म । २ ।

अग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा काण्डर्षीञ्जुहोति । प्रजापतये काण्डर्षये स्वाहा ॥ सोमाय काण्डर्षये स्वाहा ॥ अग्नये काण्डर्षये स्वाहा ॥ विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा ॥ स्वयंभुवे काण्डर्षये स्वाहा ॥ इति काण्डर्षय. काण्डनामानि वा सावित्रीमृग्वेदं यजुर्वेदं सामवेदमथर्ववेदं सदसस्पतिमिति । ३ ।

हुत्वा त्रीनादितोनुवाकानधीयते । ४ ।

काण्डादीन्वा सर्वान् । ५ ।

जयादि प्रतिपद्यते । ६ ।

स्विष्टकृदन्तं कृत्वा त्र्यहमेकाहं वा क्षम्य यथाध्यायमध्येतव्यमिति वदन्ति । ७ ।

तैषीपक्षस्य रोहिण्या पौर्णमास्यां वोत्सर्गः । ८ ।

सगण प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य यत्रापः सुखाः सुखावगाहास्तदवगाह्याघमर्षणेन त्रीन्प्राणायामान्कृ-

---

II 18 1 अथात B । व्याख्यात F

II 18 2 या अध्या॰ E

II 18 3 D F ins पञ्च before काण्डर्षी । ॰षडऋषय C D । ॰षड्ऋषये C D । षड्ऋषये C । ॰षड्ऋषिभ्य C । षड्ऋषय C । E om all from प्रजापतय to इति । षड्ऋषये C

II 18 4 धीयत D E F G

II 18 5 काडान्वा B

II 18 6 जयादि कर्म प्रति B

II 18 7 क्षम्य B 1o ally यावद्य to be written । B om वदन्ति ।

II 18 9 अघमर्षणेन F ऋ 10 1 13 II = RV X 190

त्वा सपवित्रैः पाणिभिः । आपो हि ष्ठा मयोभुवः ॥ इति तिसृभिः । हिरण्यवर्णाः शुचयः पावकाः ॥ इति चतसृभिः । पवमानः सुवर्जनः ॥ इति चैतेनानुवाकेन, स्नात्वा दर्भानन्योन्यस्मै संप्रयच्छन्तो दिशन्त इवान्योन्यम् । ९ ।

ततः शुचौ देशे प्राचीनप्रवणे प्रागग्रैर्दर्भैरुदगपवर्गाण्यासनानि कल्पयन्ति । १० । ॥ १८ ॥

---

ब्रह्मणे प्रजापतये बृहस्पतयेऽग्नये वायवे सूर्याय चन्द्रमसे नक्षत्रेभ्य इन्द्राय राज्ञे यमाय राज्ञे वरुणाय राज्ञे सोमाय राज्ञे वैश्रवणाय राज्ञे वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः साध्येभ्य ऋभुभ्यो भृगुभ्यो मरुद्भ्योऽथर्वभ्योऽङ्गिरोभ्य इति देवगणानाम् । १ ।

विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यपः ॥ इत्येते सप्तर्षयः । २ ।

निवीतिन उत्तरत उदीचीनप्रवण उदगग्रैर्दर्भैः प्रागपवर्गाण्यासनानि कल्पयन्ति विश्वामित्राय जमदग्नये भरद्वाजाय गौतमायात्रये वसिष्ठाय कश्यपाय । ३ ।

वसिष्ठकश्यपयोरन्तरालेऽरुन्धत्यै कल्पयन्ति । ४ ।

---

II 18 9 See above I 10 2 । °न्यान्यस्मै C न्यन्योन्यस्मै D । °न्तस्त इवा° D

II 18 10 प्राचीनाग्र B

II 19 1 I om °नक्षत्रेभ्य ।

II 19 2 °मित्रो D

II 19 3 नीवीतीन B । °प्रवण D । उगांदि कल्प B । कश्यपयाय F

II 19 4 F om वसिष्ठकश्यपयोर । कश्यपात B । °न्तराले C F । °रुधत्यै C । B adds a leftout कल्प°

दक्षिणतः प्राचीनप्रवणेगस्त्याय । ५ ।

तत एकवेद्यान्तेभ्यः कृष्णद्वैपायनाय जातूकर्ण्याय तरुक्षाय तृणबिन्दवे वर्मिणे वरूथिने वाजिने वाजश्रवसे सत्यश्रवसे सुश्रवसे सुतश्रवसे सोमशुष्मायणाय सत्ववते बृहदुक्थाय वामदेवाय वाजिरत्नाय हर्यश्वायनायोदमयाय गौतमाय ऋणंजयाय ऋतंजयाय कृतंजयाय धनंजयाय बभ्रवे त्र्यरुणाय त्रिवर्षाय त्रिधातवे शिबिन्ताय पराशराय विष्णवे रुद्राय स्कन्दाय काशीश्वराय ज्वराय धर्मायार्थाय कामाय क्रोधाय वसिष्ठायेन्द्राय त्वष्ट्रे कर्त्रे धर्त्रे धात्रे मृत्यवे सवित्रे सावित्र्यै वेदेभ्यश्च पृथक्पृथगृग्वेदाय यजुर्वेदाय सामवेदायाथर्ववेदायेतिहासपुराणायेति । ६ ।

दक्षिणतः प्राचीनावीतिनो दक्षिणाप्रवणे दक्षिणाग्रैर्दर्भैः प्रत्यगपवर्गाण्यासनानि कल्पयन्ति । ७ । ॥ १९ ॥

---

वैशम्पायनाय पलिङ्गवे तित्तिरायोखायात्रेयाय पदकाराय कौण्डिण्याय वृत्तिकाराय सूत्रकारेभ्यः सत्याषाढाय प्रवचनकर्तृभ्य आचार्येभ्य ऋषिभ्यो वानप्रस्थेभ्य ऊर्ध्वरेतोभ्य एकपत्नीभ्य इति । १ ।

---

II, 19, 5. दक्षिणतं B । प्राचीन॰ E

II, 19, 6. ॰वेद्यन्तेभ्यः D । ॰कर्णाय D । वाजिश्रवसे F । हुर्य॰ C. Perhaps for हर्यश्वाय॰; Bhā. II, 10 gives हर्यश्वने । ॰नाय उदम॰ E । गौत॰ F । धात्रे F । E om. वेदेभ्यश्च पृथक्पृथग् । B om. all from तरुक्षाय finishing with इतिहासपुराणेभ्यः ।

II, 20, 1. कौण्डिण्यवृत्ति॰ F कौण्डिन्याय C.

यथास्वं पितृभ्यो मातामहेभ्यश्च कल्पयन्ति । २ ।
अमुष्मै कल्पयाम्यमुष्मै कल्पयामि ॥ इत्यासनेन । ३ ।
अमुं तर्पयाम्यमुं तर्पयामि ॥ इत्युदकेन । ४ ।
अमुष्मै नमोमुष्मै नमः ॥ इति गन्धपुष्पधूपदीपैः । ५ ।
अमुष्मै स्वाहामुष्मै स्वाहा ॥ इत्यन्नेन । ६ ।
अमुं तर्पयाम्यमुं तर्पयामि ॥ इति फलोदकेन । ७ ।
अमुष्मै नमोमुष्मै नमः ॥ इत्युपस्थाय । ८ ।
अपरेण वेदिमग्निमुपसमाधाय व्याहृतिपर्यन्तं कृत्वा काण्डर्षीञ्जुहोति काण्डनामानि वा सावित्रीमृग्वेदं यजुर्वेदं सामवेदमथर्ववेदं सदसस्पतिमिति । हुत्वा प्रथमेनानुवाकेनाधीयते । काण्डादीन्वा सर्वान् । जयादि प्रतिपद्यते । स्विष्टकृदन्तं कृत्वा त्र्यहमेकाहं वा क्षम्य यथाध्यायमध्येतव्यमिति वदन्ति । ९ ।
काण्डात्काण्डात् ॥ या शतेन ॥ इति द्वाभ्यामुदकान्ते दूर्वा रोपयन्ति । १० ।
उदधिमूर्मिमन्तं कृत्वा प्राचीमुदीचीं वा दिशमातमितोराजिं धावन्ति । ११ ।
प्रत्येत्यापूपैः सक्तुभिरोदनेनेति ब्राह्मणांस्तर्पयन्ति । १२ ।

---

II 20 2 B ins कल्पयित्वा before यथास्व ।
II, 20 4 इत्युतकेन B
II 20 7 F repeats sutras 4 6 9 ।
II, 20 9 पच काण्डर्षीं •F । D F ins काण्डर्षेय after •होति । •धीयते D F F
II 20 10 B D F have प्राग्दन्तौ a text of या शतेन । T S 1
2 9 2
II 20 11 •मूर्मिन्त कृ• B । दिशमभितो राजिं धावन्ते B
II 20 12 ब्राह्मणांश्च त• D

एवं पारायणसमाप्तौ दूर्वारोपणोदधिधावनवर्जम् । १३ ।
नित्यमेवाद्भिर्देवानृषीन्पितृंश्च तर्पयन्ति तर्पयन्ति।१४।।२०॥

## अष्टमः पटलः

## द्वितीयः प्रश्नः समाप्तः ॥

II, 20, 13. D F ॥१ कांडात्कांडादिति after °समाप्तौ ।
II, 20, 14 °न्पितृंश्च F °न्पितश्च तर्पयति । B

1. ... येन कर्मणा यस्मिन्वा कर्मण्याचार्यसमीपं नीयते कुमारस्तदुपनयनम्। किम्। तदग्न्यायतनोद्धननादिसावित्रीव्रतविसर्गान्तं तद्विस्तरेण सकलं वक्ष्यामः। सोयं दृष्टार्थः संस्कार उपनयनं नाम विद्यार्थिन आचार्यसमीपमुपगमनमुपनयनं विद्यार्थस्य श्रुतितः संस्कार इति वचनात् (Dh. I, 1, 8)। तत्त्रैवर्णिकानामेव स्यान्न शूद्राणामुपनयनं वेदाध्ययनमिति शूद्रादीनां प्रतिषेधात् (Dh. I, 1, 5)। तस्माच्छूद्रसमीपे नाध्येतव्यमित्यादिना तत्समीपेध्ययनप्रतिषेधाच्च। पुंसामेव क्रियते न स्त्रियाः। स्त्रिया नाध्येयम्। न स्त्रीशूद्रसमीपे ब्रह्म श्रावयेदिति च स्त्रिया अध्ययनप्रतिषेधात्। पाणिग्राहो विधिः स्त्रीणामौपनायनिकः पर इत्युपनयनभक्तित्वाच्च विवाहस्य (s. Manu II, 67)। ...

2. सप्त वर्षाणि यस्य जन्मतः परिमाणं स सप्तवर्षः। ब्राह्मणं तमुपनयेत्। उपनयीतेत्यपपाठः। जन्मत आरभ्य सप्तमे वर्ष उपनयेतेत्यर्थः। धर्मेषु चैतदेव वक्ष्यति गर्भाष्टमेषु ब्राह्मणमिति *(Dh. I, 1, 18)*। तस्मादिह वचनम्। गर्भाष्टमे वर्षे ब्राह्मणमुपनयेदिति शास्त्रान्तरे दर्शनात् (Āśv. I, 19, 2)।

3. एतयोरपि पूर्ववदर्थः। जन्मतः संख्या गर्भादारभ्य तदुभयं धर्मेषु विकल्प[स्य]ते (Dh. I, 1, 18)।

4 सर्वत्रोपनयेदिति शेषः। कालस्यापि धर्मेषु सिद्धस्य पुनर्विधानं कालान्तरदर्शनादेकेषामुदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहा इति।

5 ··· विशेषेणेति वचनात्पुंनामधेये विशिष्टमुपनयनमन्यस्मिन्नपि पुण्ये न गर्हितम्। अश्वयुक्पुनर्वसू तिष्यो हस्तः शतभिषक्प्रोष्ठपदा इति पुंनामधेयानि।

6 युग्मान्युग्मप्रभृतीन्समसंख्याकान्। वृद्धौ फलभूयस्त्वम् (s Asv IV, 7, 3)। ··· परिविष्य तर्पयित्वा तैः पुण्याहं सुदिनत्वं सर्वकालमहनि स्वस्त्ययनं रक्षापुष्टिपुत्रधनधान्याद्यभिवृद्धिः। पुण्याहं भवन्तो ब्रुवन्तु। स्वस्ति भवन्तो ब्रुवन्तु। ऋद्धिं भवन्तो ब्रुवन्त्वित्येवं पुण्याहवाचनविधिना वाचयित्वेत्यर्थः। इतिशब्दो न्याय्याभिवचनानां परिग्रहार्थः।

7 माल्यानुलेपनादिना मण्डितम्।

8 अहतमनुपयुक्तं वासः।

9 प्राचीनोदीचीनप्रागुदगवनतानामन्यतमस्मिन्। शास्त्रान्तरदर्शनादिपुमाचावरे (Asv I, 3 1)। अग्न्यायतनमुद्धत्याभ्यान्येन वा। पुनर्धर्मशास्त्रे दर्शनादुपसमाधानदेशे तिस्रो रेखाः प्राचीरुदगपवर्गास्तिस्रश्चोदीचीः प्रागपवर्गा लिखित्वा (Dh II, 1, 13)। कृत्स्नमग्न्यायतनमद्भिरवोक्ष्योत्सिच्यावोक्षणोदकशेषमुत्तरेण पूर्वेण वान्यदुपनिदध्यात्।

10 श्रोत्रियागारादग्न्यायतनमध्य उपसमादधाति काष्ठान्यभ्याधाय प्रज्वलयतीत्यर्थः। इहोपनयनादिषु कर्मसु पूर्वेद्युस्तदहरेव वा प्राक्कर्मारम्भान्नान्दीमुखं श्राद्धं शास्त्रान्तरे दृष्टं सर्वे कुर्वन्ति। तदप्यविरोधात्तत एवागमस्य कार्यम्।

11 तमग्निं प्रागग्रैर्दर्भैः पुरस्ताद्दक्षिणतः पश्चादुत्तरत इति परिस्तृणाति। ...

12 अपि वा पश्चात्पुरस्ताच्च ये दर्भास्त उदगग्रा भवन्ति प्रागग्रा एव दक्षिणा उत्तराश्च।

13 प्रागग्राश्चोदगग्राः। प्रत्येकमग्रशब्दः परिसमाप्यते। यदि परिस्तरणदर्भाः प्रागुदगग्रा भवन्तीत्येतस्मिन्पक्ष इत्यर्थः। तत्र दक्षिणान्दर्भान्पूर्वापरेभ्यो दर्भेभ्य उत्तरानुपरिशयान्करोति। उत्तरांश्च दर्भानधरानधःशयान्करोति। यदि प्रागुदगग्रा इति वचनमुत्तर एव पक्षेयं विधिः स्यान्न प्रागग्रपक्ष इत्येतदर्थम्। नैतदस्ति। आनन्तर्यादसंभवादेतत्सिद्धं हि। एवं तर्हि। श्रौतेष्वपि स्तरणमधरोत्तरभाव एव भवेदितीदं दक्षिणप्रागग्रतायामप्युदगग्रताया अपवादं [sic] वा दक्षिणाग्रतायाः। एवं भवत्येव।

14 दक्षिणेन परिस्तीर्णमग्निं ब्रह्मण आयतने प्रवेशनदेशे दर्भान्सम्यग्बहुलान्संस्तीर्य।

15 ... आत्मीयमग्निमात्मनि गृहीत्वा तथा संकल्प्य जपित्वेत्यर्थः।

16 यथार्थं यथाप्रयोजनं द्रव्याणि प्रयुनक्ति। कानि तानि। अश्मादीनि दश येनान्येनापि प्रयोजनं तच्च। .....

17 अश्माक्रमणाय। वासः परिधानार्थम्। अजिनमुत्तरीयार्थम्। ... त्रिवृत्त्रिगुणा। त्रिवृतामित्यपरः पाठः। अजादिपाठो विभाषानुमेयः (Pāṇ IV, 1, 4)। सर्वेषां व्यञ्जनानामाकारं वष्टि भागुरि(रभीष्टि)रित्येके। .....

18 एकविंशतिदारुमेकविंशतिकाष्ठमिध्मं संनह्यति।

संनह्य प्रयुनक्तीत्यर्थः। आहुतीनां परिमाणं संख्याहुतिपरिमाणमिव परिमाणं यस्य साहुतिपरिमाणः। उष्ट्रमुखवदुत्तरपदलोपः। यावत्य आहुतयस्तावद्दारुको भवेदित्यर्थः।

19 तस्मिन्निध्मे शम्याः शम्याकृतिकांस्त्रीन्परिधीनुपसंनह्यति। शम्याशब्द इहाकृतिवचनः। यथा यज्ञायुधेषु। तत्साते याज्ञिकस्य वृक्षस्य। ····

20 दर्वीम्। कृदिकारादक्तिन इतीकारः (Unadis 3, 84)। पालाशी होमार्थत्वात्। खादिर्यपि दृष्टा शास्त्रान्तरे।·· आज्यस्थाली मृन्मयी प्रसिद्धा। प्रणीताः प्रणीयन्ते येन तत्प्रणीताप्रणयनम्। तदपीह मृन्मयमेवान्यस्यावचनात्। येन चार्थ इत्यनुक्तानामपि प्रयोजनवतामुपसंग्रहार्थम्। यथा प्रोक्षणार्थं पात्रं बहिरङ्गारनिर्हरणार्थं काष्ठमिति।

21 सकृदेव युगपदेव सर्वाणि प्रयुनक्ति यथोपपादं वा यथासंभवं वेत्यर्थः। यथोपपदमित्यपपाठः।··· यथोपपादं यथैवोपपद्यन्ते तथैव प्रयुनक्ति नान्यथ।·····

22 एतस्मिन्काले ब्रह्मर्षिः··· उत्तरेणापरेण वा कर्तारं गत्वा · उपविशति। एतस्मिन्काल इति वैदिकेपि पाचासादनानन्तरमेव ब्रह्मणः प्रवेशो नार्वागित्येतदर्थम्। अप आचम्येति शुद्धस्यापि कर्माङ्गं पुनराचमनम्। यज्ञोपवीतग्रहणं कर्माङ्गस्याविकाजिनस्य वाससो वोपादानार्थं पित्र्ये वा तस्य प्राचीनावीतत्वनिराकरणार्थमथवा यज्ञोपवीतं कृत्वेति यज्ञोपवीतस्य प्राधान्यप्रख्यापनार्थम्। तेन वस्त्रालाभे तत्स्थाने यज्ञोपवीतं वा स्यात्। तथैकेषामुक्तं छत्त्रं यज्ञोपवीतं कमण्डलुं वेति।··· एतस्मिन्काल इति वचन-

मनित्यः पुरुषो नित्यः काल इत्येतदर्थम्। तेन स्रुचादीना-मेको वा ब्रह्मणः स्थाने स्यात्। · · ·

23. · · · उपबिलं पूरयित्वा यथा न स्कन्दति। · · ·

24. · · · प्रोक्षति पात्राणि। प्रोक्षणीः संस्कृत्येत्येव सिद्धे तिरःपवित्रमिति वचनं प्रागप्यसाद्धर्मोऽस्तीति ज्ञापयति। तेन तूष्णीं पात्रस्य त्रिः प्रक्षालनं द्विस्त्वासिच्य पूरणं प्रणीतास्विव न भवतीति गम्यते। · · ·

25. · · · जुहूवत्संमार्ग इत्युपदिशन्ति। निधानं दर्भेष्विति निशब्दादध एव नोपरि वा काष्ठादौ।

26 संमार्गान्दर्भानद्भिरभ्युक्ष्य · · ·

## Khanda 2

1. · · · पुनराज्यग्रहणं प्राधान्यख्यापनार्थम्। तेन गव्यमाज्यं स्यात्। द्रव्यान्तरसंसर्गप्रतिषेधार्थं वा। तेन शोधयित्वोपरि पवनेन ग्राह्यम्। · · · अवद्योत्य दर्भैरवाचीनज्वालैरुपरि ज्वलयित्वा। · · · तानङ्गारांस्तेनैव काष्ठेन प्रत्यूह्याग्नौ पुनः प्रक्षिप्य निरस्य काष्ठम् · · · त्रिरुत्पूय पश्चादारभ्य प्रागपवर्गमुत्पूय · · · पुनः पवित्रग्रहणं विस्रस्य पृथग्भूतयोः सहाभ्याधानार्थम्। तस्मादादित एव ते च द्वे स्याताम्। · · · व्यक्तं च बौधायनः पवित्रे विस्रस्याद्भिः संस्पृशेदित्याह (Baudh I, 4) । · · ·

4 · · · अधरोत्तरभावः परिस्तरणवदत्र द्रष्टव्यः। इहाधिकारादेव सिद्धे चीरण्यग्निग्रहणानि क्रियन्ते। तानि केवलस्याग्नेः संप्रत्ययार्थं परिस्तीर्णस्य मा भूदिति। तेनोपर्येव

परिस्तरणानामग्नेः परिधानं कार्यं न बाह्यत इति । इतरथा पात्रासादनवद्ब्रह्मसदनवच्च बाह्यतश्च प्राप्नोति हि । ˙ ˙˙

5 प्राङ्मुखः कर्ताचार्य उपविशति । ˙˙

6 ˙ आचमनयज्ञोपवीते [sic] कुमारस्यातः प्रभृति स्यात्रार्वागितः । सिद्धयोरपीह वचनं केषाचिदिह मन्त्रेण यज्ञोपवीतस्य क्रियोक्ता । यज्ञोपवीतेनोपव्ययामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय ,सर्वेषां वेदानामाधिपत्याय यशसे ब्रह्मवर्चसाय त्वामिति कौपीतकानामय मन्त्रः । बौधायनीयानां त्वेके । यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहज पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्र यज्ञोपवीतं बलमस्तु तेज इत्येष मन्त्र˙ (Baudh II, 5) ।

7 अथानन्तरमाचार्यः परिषिञ्चति सर्वतः सिञ्चतीत्यर्थः ।

9 ˙˙ सरस्वत इत्येतस्मिन्मन्त्रे पत्नीगर्भिणीवत्स्त्रिमा छान्दसे ह्रस्वत्वे संबुद्धिलोपो गुणश्च स्यात् ।

10 ˙˙ सावित्रहोममन्त्रस्यादिग्रहणमेतदित्येके छन्दोगाना तथा दर्शनात् (Gobh I 3 4) । तन्नेत्युत्तरत्र प्रतिपादयिष्याम. (I, 7, 6, c) ।˙

11 ˙ इध्ममाज्येन दर्व्याङ्क्त्वा प्रक्षालयित्वाग्नौ [sic] हस्तेनाभ्यादधाति । ˙˙˙

12 ˙˙ अथशब्द इध्माघारयो˙ संबन्धार्थः । तेनाघारवत्येव दर्विहोम इध्मो नान्यत्र ।

13 उत्तरं परिधिसंधिमनुलक्षयित्वा [sic] तेन पर्येत्यर्थः । अवदत्य प्रवेश्य दर्वीम् ।

14 ··· मनसा ध्यायन्निति निवर्ततेतो वाचैवाभिघारयति । एतयोराघारयोर्ज्योतिष्मति होमः । सर्वेषामिध्मकाष्ठानां संस्पर्शनं चेष्यते ।

15 ··· आज्यभागाविति संज्ञासंव्यवहारार्थम् ।

16 अग्नेरुत्तरार्धस्य पूर्वार्धमुत्तरपूर्वार्धे तथा दक्षिणार्धपूर्वार्धे । जुहोतीत्युभयोः शेषः ।

17 तावाज्यभागावन्तरेण तद्धोमदेशयोर्मध्य इतरा आहुतीर्जुहोति । ···

18 ··· चतस्रो जुहोति । द्वितीये संराधनीमिति पठितव्यं यजेः सकर्मकत्वादित्येके । यथापठितमेव विभक्तिव्यत्ययादित्यन्ये । तन्न । उदीच्यानां संराधनीमिति पाठः । तस्माच्चिरन्तनासिकोपपाठः । स्वाहाकारस्यापाठेपि तस्मान्ने यज्ञ इत्येतदन्तो होममन्त्रः । मन्त्रान्ते नित्यः स्वाहाकार इति परिभाषायाः स्वाहाकारः स्यात् (I, 3, 2) ।

## Khanda 3

1 ··· सर्वे दर्विहोमाः सर्वदर्विहोमाः । के पुनस्ते । उपनयनस्नानविवाहाष्टकादयः । तेषामेष कल्पो विधिर्भवति योसावुद्धननादिरनुक्रान्तः । ··· अथ सर्वग्रहणं किमर्थम् । त्रिःप्रकारा दर्विहोमा आघारवन्त आपूर्विका आग्निहोत्रिकाश्चेति । तत्र येषामेतदन्तं सर्वं भवति त आघारवन्तः । येषां यावदुक्ता एवाहुतयस्त आपूर्विकाः । येषां द्विर्होमस्त्रिश्च प्राशनं त आग्निहोत्रिकाः । तेषां सर्वेषामनेनातिदेशः स्यादित्येतदर्थम् । ···

2 तेषु दर्विहोमेषु यैर्मन्त्रैर्होमस्तेषामन्ते नित्यं स्वाहाकारः स्यात्। यत्र पाठो नास्ति स्वाहाकारः स्यात्तदर्थमयं पाठः। इदानीं किमर्थम्। मन्त्रचिकीर्षार्थम्। तत्र श्रौतं प्रायश्चित्तमितरत्न स्मार्तमितरत्र [मित्यत्र] ग्रहणम्। पित्र्येपि यत्र स्वधाकारो न पठ्यते तत्र स्वाहाकारार्थम्। यत्र तु पठ्यते तत्र स्वधाकारस्यापि प्रदानार्थत्वान्नास्ति स्वाहाकारः। तत्राप्येके स्वाहाकारं कुर्वन्ति नित्यवचनात्। श्रौते विहितमिह न स्यादितीदं सूत्रम्।

5 आयुः॰ ॰स्वाहेत्येषा प्रधानाहुतिः। अभिरक्षतादिमम्। जरसे नयेममिति लिङ्गतः पुरुषसंबन्धात्। केचिदेषेति पूर्वस्यां वचनं प्रधानाहुतित्वख्यापनार्थम्। तदेवोत्तरस्यामनुवर्तते तेन तस्या अपि प्रधानाहुतित्वमिति चेत्। न। एकस्या एकवद्भावप्रतिग्रहणमेवेत्याचार्यशैली। ब्रह्मप्रतिष्ठेत्यत्रोक्तं हि। बहूनि चास्मिन्सूत्र एषेति वचनानि। यदि सर्वेषां शक्यते प्रयोजनं वक्तुं ततोत्रापि वक्तव्यम्।

7 · · · आहुतीभिः। दीर्घोपपाठः। असंसक्तामसंस्पृष्टामतिहायेतरा आहुतीर्जुहोति।

8 अत्रास्मिन्कर्मणि। · · · यद्यत्रेति कर्म प्रकृतं निर्दिश्यते नार्थोनेन प्रकरणादेव सिद्धत्वात्। देशार्थस्तर्ह्यस्मिन्देशे जुहृतीति। ननु तदपि कर्म पुरस्तात्स्विष्टकृत एव सिद्धम्। एवं तर्हि। देवमात्रेण जयादीनां प्राजापत्यान्ते संबन्धो नोपहोमत्वेनेत्येतदर्थम्। तस्माद्व्याहृतिपर्यन्तस्य वारुण्यादेश्चाङ्गत्वमेव यथोक्तमधस्तात्। यद्येवमन्नप्राशनादिषु प्रधानाहुतेरेवानाम्नानात्तासामेत उपहोमाः स्युः। एवं तर्हि।

तदुभयमेव तत्र प्रधानमिति ब्रूमः। एवमपि तस्यैव। तत्कथम्। इदमङ्गत्वादप्रधानत्वमित्युपपन्नम्। अपि तत्र यन्नेति वचनं जयादिष्वस्ति। तत्किं कुर्यात्। एवं तर्हि। यदूर्ध्वमाज्यभागाभ्यां व्याहृतिपर्यन्तं कर्म तत्साधारणं प्रधानमिति क्रमः। यच्चायुर्दादि तद्वैशेषिकमिति। तत्र प्रधानस्याङ्गरूपत्वादङ्गवदतिदेशः कृतो द्रष्टव्यः। ....

9 .. त्रयोदश जयाञ्जुहोति। देवासुरा इत्यादि ब्राह्मणम्। चित्ताय स्वाहा। चित्तये स्वाहेत्येवं चतुर्थ्यन्तैर्वा द्वादशभिर्जुहुयादविकृतैव त्रयोदशी। एवमपि शाखान्तरेस्ति पाठ इत्यवगन्तव्यम् (s Man I, 11)। ..

10 अग्निरित्यष्टादशाभ्यातानाञ्जुहोति।

11 अस्मिन्ब्रह्मन्नित्यादिदेवहूत्यामित्येतदन्तमभ्यातानेष्वनुषजति। .....

12 .. उपतिष्ठते वा तेन मन्त्रेण प्राचीनावीती पितॄन्। अग्निमित्येके। लिङ्गविरोधस्तथा स्यात्।

13 द्वादशैते पर्यायास्ते सप्तमोत्तमा एकाहुतिकाः। .. उत्तरां जुहोति। अत्र पर्यायमनुद्रुत्येत्येतदनुवर्तते। नानुवर्तत इत्येके। तेषां सर्वपर्यायेषु नामादिपान्त्वन्तोनुषङ्ग इति। तत्र पर्यायम [य सा] नुषङ्गमनुद्रुत्य तस्मै स्वाहेति पूर्वाहुतिर्होतव्या। यथा। संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोप्सरस आयुवो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहेति [पूर्वा] ताभ्यः स्वाहेत्युत्तराम्। एवमुत्तरास्वपि। तथा सति ताभ्य इत्येतस्य साकाङ्क्षस्यौपधयोप्सरस इत्यन्वयमपेक्षमाणस्य पृथक्प्रयोगो

नोपपद्यत इति । अपरेचैवं वर्णयन्त इत्याहुः । तेषां पूर्वाहुतिः पर्यायं सानुषङ्गमनुद्रुत्य होतव्या । यथा । ऋताषाड्ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहेति । एवमुत्तरास्वपि । तत्र पूर्वस्यामाहुतावयं पिण्डार्थः । य एवं गुणवान्गन्धर्वो यस्य सभूता एवंनामानोप्सरसः स ताभिः सहेदं ब्रह्म क्षत्रं पान्तु [sic] ताभ्यः स्वाहा हविर्जुहोमीत्युत्तरस्याम् । अन्येषां त्वेवमेव सूत्रार्थः । अर्थवशेन पदानि सहानुषङ्गेण विभज्य पूर्वोत्तरयोराहुत्योरनुद्रवणं पर्यायैकदेशे च पर्यायशश्छस्तैलघृतपञ्चालादिवत् । तत्रैवं प्रयोगः । ऋताषाड्ऋतधामाग्निर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा । तस्यौषधयोप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहेति । एवमुत्तरास्वपि । . . . . .

## Khanda 4

1 . . . गत्यर्थत्वादाङ्पूर्वस्य तिष्ठतेः प्रयोज्यस्य कर्तुः कर्मत्वम् । दक्षिणेनेति नियमार्थमुभयनिवृत्त्यर्थं वा । प्रकरणात्सिद्धेपि कुमारग्रहणमस्य विधेरन्यत्रापि प्रसङ्गोस्तीति । तेन विवाहेप्ययेणोत्तरं परिधिसंधिं निधाय दक्षिणेन पादेनायं विधिः सिद्धो भवति । स्पृष्टत्वमेव वा । तथैवमग्मादीत्येवमादीनि द्रष्टव्यानि ।

2 . . पूर्वं वासः परिधापितं प्रज्ञातं निधाय । या अकृन्तन्निति परिधापनमन्त्रः । इदं वासः पुण्ये कर्तव्यमिति

शाखान्तरे दृष्टं तदस्माकमप्यविरुद्धम्। उक्तक्रमादेव सिद्ध आनन्तर्ये अथेति वचनं नित्यः क्रमो दृष्टव्यो मन्त्रावनित्या-विति ख्यापनार्थम्। तेनाजिनस्य वा परिधापनं स्यात्तत्र च मन्त्राम्नानमपि। वक्ष्यति च धर्मेषु ब्रह्म° (Dh I, 3, 9)। अन्येस्यानित्यत्वख्यापनार्थोथशब्द इत्याहुः। तेषां पुनरुपन-यने नास्ति परिधानम्। ⋯⋯

3 ⋯ परिधानं कृत्वा न परिधानाभावेतश्चाजिनपक्षे न स्यात्।

4 ⋯ परिव्ययति परिवेष्टयति नाभिदेशमन्तरतो ना-भिमिति दर्शनात्। ⋯ अथेत्यभावार्थः पुनरुपनयने। ⋯

6 ⋯ असाविति संबुद्ध्या कुमारस्य नाम्नो ग्रहणम्। अत्राथशब्दः पूर्ववद्धृत्यनित्यत्वाय। तेन वासोत्त [स उत्त]रीयं स्यात्। वक्ष्यति च धर्मेषु द्यात्° (Dh I, 3, 9)। अभा-वायास्य पुनरुपनयन इत्येकेषां पूर्वोमात्तमेव स्यात् (I, 4, 2, c)। ⋯

8 ⋯ अत्रानियतत्वाय पुनरुपनयनेथशब्दः। बह्वृ-चानामप्युक्तमनिरु° (Aśv I, 22, 27)। एनमिति वैश्याधि-कारनिवृत्त्यर्थम्।

9 ⋯ संनतिरूहितैर्मयि मेधामित्येषा मयिशब्दानां स्था-ने त्वयिशब्दान्कृत्वेत्यर्थः। त्रयाणामन्ते प्राशनम्। इतिवच-नमाचार्यस्य मन्त्रप्रयोगार्थं वैश्याधिकारनिवृत्त्यर्थं च।

12 ⋯ एतेनोभाभ्यां मन्त्राभ्यां न पूर्वः। तत्र समीक्षणं न विद्यते।

## Khanda 5

1 ˙˙ स्वयमासीनः ˙˙ अभिमन्त्रयते । ˙˙

2 ˙˙ यत्र यत्राथशब्दस्य प्रयोजनं नोच्यते तत्र शास्त्रान्तरे क्रमान्तरदर्शनात्क्रमनियमार्थमित्यवगन्तव्यम् । ˙˙ आचार्यसंबोधनार्थत्वादाचार्यो वाचयेत् । एकश्रुत्यं स्यादस्य संबोधनार्थत्वात् ।

3 कुमारमाचार्यः पृच्छति ।

5 ˙˙ यथोत्तरत्र (sū 6) नामनी गृह्णातीति वचनं द्वयोरपि नाम्नोराख्यानं यथा देवदत्तः कार्त्तिकोऽसीति ।

6 ˙˙ नामनी गृह्णाति व्यावहारिकं नाक्षत्रं च । वक्ष्यति हि नक्षत्रनाम द्वितीयं स्यादिति (II, 4, 13) । यथानेन देवदत्तेन कार्त्तिकेनोदृचमाशीयेति ।

7 ˙˙ उभौ कुमाराचार्यौ मार्जयेते । उभयोर्मन्त्रः । ˙˙˙

8 ˙˙˙ दक्षिणं कुमारस्य बाहुमभ्यात्मनात्मन आभिमुख्येनानयित्वा [sic] दक्षिणतः समासीन उपनयते समीपं नयति नीत्वा संस्पर्शयतीत्यर्थः । अथवा स्वं दक्षिणं बाहुमभ्यात्मनाभिमुख्येन कुमारमुपनयते समीपं नयति । अत्रासाविति संबुद्ध्या व्यावहारिकस्यैव ग्रहणम् । एवमुत्तरत्रापि । ˙˙ सावित्र्येतिशब्दो मन्त्रपठितस्य ग्रहणार्थो न यथोत्तरत्र पाठः (I, 6, 11) । ˙˙˙˙

10 ˙˙ अपोशान इत्याचमनाद्युपलक्षणार्थम् । अश्नीत्यर्थे वाभिव्याप्तावश्नोति[:] । समिध आधेहीति सायं प्रातरभ्याधानाभिप्रायम् । कर्म कुर्विति गुरुशुश्रूषाभिप्रायम् ।

11 ··उपर्युपरि दक्षिणस्यांसस्योपरि सामीप्येन पृष्ठतः प्रवेश्यान्ववमृश्य क्रमेणावाचीनमभिमृश्य हृदयदेशमभिमृशति। ·· उभयादिषु चिन्विति द्वितीया (Kaiyaṭa on Pāṇ II, 3, 2, Kielhorn, M Bh I, p 441)। सामीप्यादुपरिशब्दस्य द्विर्वचनम् (Pāṇ VIII, 1, 7)।

## Khaṇḍa 6

3 अग्नावित्युभयोः कर्णयोरनुपजपति।

6 अत्रास्मिन्काले परिदानानन्तरम्। ··· प्रायश्चित्तार्थे पुनरुपनयनमित्यर्थः। कस्मात्। चरितव्रतत्वात्। अत्रेति वचनं यद्वेपर्यवेतेस्मिन्नेव काले सावित्रीवाचनार्थम्।

7 ·· सावित्रीं वाचयति। कुतः। व्रतचरणार्थम्। वक्ष्यति हि व्रतचर्याम्। यद्व्रतं चरतीत्यादि (I, 8, 1)॥

8 पुष्करेन्तरिक्षे सीदतीति पुष्करसादिर्ऋषिस्तस्यापत्यं पौष्करसादिराकाशगमनः। अवकाशे निग्रहाये सीदतीति वा। पद्मस्य वा समीपे पुष्करिणीतीरे सीदतीति पुष्करसदृषिस्तस्यापत्यं पौष्करसादिः। बाह्वादित्वादिञ् (Pāṇ IV, 1, 96)। अनुशतिकादित्वादुभयपदवृद्धिः (Pāṇ VII, 3, 20)। पुष्करसादिरित्यपपाठः। वक्ष्यति धर्मेषु तथा॰ (Dh I, 19, 7)। · · · · ·

9 ·· आचार्यः प्राङ्मुख उपविशति। ··

10 ·· आचार्यायोपसंगृह्य। तादर्थ्ये चतुर्थी। यथाशास्त्रमुपसंगृह्येत्यर्थः। ·· अधीहि भोः ·· सावित्रीं भो अनुब्रूहीत्युभयमेकश्रुत्या। तत्राधीहीत्यध्यापय वेदमित्यर्थः। भो

वत्सलानुकम्पक । सावित्रीं भो अनुब्रूहीति सावित्रीमनन्तरमेव ब्रूहीत्यर्थः । ...

11 .... एनमिति कुमाराभिमन्त्रणार्थं लिङ्गाद्ब्रह्मणस्पतेर्मा भूदिति । अत्र ब्रह्मणो वेदस्य पाचत्वात्पालयितृत्वाद्वा कुमार एव ब्रह्मणस्पतिरभिमतः । .. असा इति सावित्री कुमाराय प्रदीयत इति ख्यापनार्थम् । अतस्तेनापि सा वाच्या न श्रवणमात्रमत एवोक्तं सावित्रीं वाचयतीति (I, 6 6) । अथे पच्छ इति वचनमेवं संततमुक्त्वा तदशक्तौ यथाशक्ति वाचयेदिति । बह्वृचानामयुक्तं यथा° (Asv I 21 6)

Khanda 7

1 अथेति कुमारकर्मान्तराधिकारार्थः । तेन समिदाधानादि प्रधानाङ्गमेव न सावित्रीवाचनाङ्गम् । तस्मादनुपेतस्य परिदानानन्तरमेव कार्यम् । अभ्याधापयत्ययौ कुमारेण । कुमारो मन्त्रं ब्रूते लिङ्गादाचार्यस्तु वाचयति प्रयोजकत्वात् । एतदर्थोऽथशब्द इत्येके ।

4 . एतयोरप्याहार्ये वृहत इत्याद्या अनुपज्या अविकृतास्त्वमग्ने समिधा समिध्यस इति । .

5 . अथशब्दः पूर्वैस्तुल्यत्वख्यापनार्थः । तेन सर्वदर्विहोमाणामिदमङ्गं नोपनयनस्यैव ।

6 . यथा । अदितेन्वमंस्थाः । देव सवितः प्रासावीरिति । तत्र मन्त्रानित्येव सिद्धेऽन्तग्रहणं देव सवितः प्रसुवेति यावदुक्तमेव समयो नादिग्रहणमिति ख्यापनार्थम् । .

7 ‥ अथेत्यनन्तरेण तुल्यत्वाय तेनोपनयनाङ्गं न सर्वेदर्विहोमार्थम्। ‥

8 औपनायनिकोऽग्निः प्रकृतहानेरर्थाद्व्रतपतिः। केचित्पार्थिवमग्निं मन्यन्ते। ‥ व्रतं चरिष्यामीति लिङ्गादेतद्व्रतोपायनं ब्रह्मचर्यव्रतं चैतत्समावर्तने विसर्गदर्शनात्। तस्मात्तदैव परिमाणं बुद्ध्या संकल्पनीयम्। ‥

9 अत्र गुरव आचार्याय वरं ददाति कुमारः। गुरुग्रहणं ब्रह्मनिवृत्त्यर्थम्। पितुः स्याद्वरदानम्। उक्तो वरः। ‥

10 ‥ उत्थाप्य कुमारम्। कुमारो मन्त्रस्य वक्ता लिङ्गादाचार्यो वाचयिता हेतुत्वात्। ‥ आदित्यमुपतिष्ठत आचार्य एव समानकर्तृकत्वात्परिदानोत्थापनाभ्याम्। केचित्त्वड्‌ाशीष्ट्वान्मन्त्रस्य [sic] कुमारमेवोपस्थातारं मन्यन्त उपतिष्ठते च हेतुः कर्तरि कर्तृव्यपदेशः। यथा पञ्चभिर्हलैः कृषतीति। तेषामाचार्यो वाचयिता कुमार उपस्थाता। आचार्यकर्तृत्वेपि यां कांचिदृत्विगाशिषमाशास्ते यजमानस्य यथेत्याशीर्वचनमुपपद्यत एव। ‥

11 ‥ कुमाराय दण्डं प्रदायान्नं मृन्मयं भाजनं तूष्णीं प्रयच्छति।

12 इहायशब्दः पुनरुपनयने भिक्षाचर्याभावात्। तदर्थत्वाच्च दण्डान्नदानं निवर्तते। ‥

13 ‥ एवकारकरणमन्यप्रसङ्गास्तित्वख्यापनार्थम्। तेन मातुरभावे मातृस्थानीयामप्रत्याख्यायिनीं भिक्षेत। नास्ति प्रायश्चित्तम्। बह्वृचानामविशेषेणोक्तमप्रत्या° (Ās. 1, 22 6 7)। ‥

15 ·· भैक्ष्यमि[भैक्षमि]दं भो इत्यस्य प्रतीकग्रहणमित्येके । यावदुक्तमित्यपरे वचनसामर्थ्यादिह । तदाचार्यः प्रतिगृह्णाति दृष्टार्थत्वात् । बौधायनीयेप्युक्तम् (Baudh II, 8)।

16 प्रतिगृह्णातीति ।

17. ·· अस्य कुमारस्य प्रथममाच्छाद्यत इति प्रथमवास्यं पूर्वं निहितं वास इत्यर्थः (I, 4, 2)। तदाचार्य आदायात्मसात्करोतीत्यर्थः । केचित्प्रथमं वासो निहितं वासस्तत्र भवं तेनोपहितं प्रथमवास्यं भिक्षामात्र[मत्र]वर्णकस्यानुकर्षणात् । भवे छन्दसीति (Pan. IV, 4, 110) । तदाचार्य आदाय शिष्यायैव वासः प्रयच्छतीत्यत एव गम्यते । तेनोपनिधाय भिक्षा चरितव्येति । अन्ये प्रथमं वास्यते निधीयतेय इति प्रथमवास्यं मातुर्लब्धं भैक्षं द्रव्यं तदादत्ते । अथ (भैक्ष्यस्य) भैक्ष्यं[क्षं] कुमाराय प्रयच्छति । स पित्रे तद्ददातीति । किमचार्थवत्त्वम् । पूर्वनिहितं वास इति । दृष्टं हि बौधायनीये गृह्ये पर्यवेतेनेन मन्त्रेण तस्यादानम् (Baudh II, 8) ।

18 उपस्थित आगत आनीतेन्ने ब्राह्मणपरिवेषणार्थम् । ··· नाचावदानधर्मोस्त्यापूर्विकत्वात् (I, 3, 1, 4.) । उपस्थितवचनं किमर्थम् । ओदनस्यापूपानां सक्तूनामित्युच्यमानेऽपि संस्कारः प्राप्नोति । बहिः संस्कृतस्यानयनार्थमिदम् । एवमप्युपस्थितानामोदनापूपसक्तूनां समवदायेत्येतावता सिध्यति । किमन्नग्रहणेन । एवं तर्हि । सर्वान्नार्थमन्नग्रहणम् । तेन ज्ञायते भोजनार्थमप्येतदुपस्थितं न होमार्थमेवेति । अनेन ज्ञायते भोजनं हुतशेषस्यैव नान्यस्येति । ·····

19 नादिष्टानादिष्टा देवता यस्मिन्नन्नहोमे सोनादिष्ट-देवतस्तस्मिन्सर्वस्मिन्नेता आहुतीर्जुहुयात् । कः पुनः सः । यत्र ब्राह्मणानन्नेनेति चोद्यते तत्रानेनातिदेशादिहापि ब्राह्मणभोजनस्य भावः । · · · · यत्राचारोप्यस्ति तत्रायं विधिः स्यादित्येतदर्थं सर्वग्रहणमित्युक्तम् । आचाराभावादभावः स्यात् ।

20 यत्रान्नहोम आदिष्टा देवता तत्र । · · · सर्वत्रेति चानुवर्तते । तेनाचाराद्भ्रियमाणेषु विष्णुरुद्रस्कन्ददिवाकरादिषु यज्ञेष्वप्येवं स्यात् । · · · · ·

21. एतेषामेवौदनादीनाम् । · · एतेषामिति वचनं व्यञ्जननिवृत्त्यर्थम् । एवकारकरणं विवृतोन्यत्र महाराजद्योादौ मा भूदिति । बलिं करोतीति वचनात्प्रथममवोक्ष्य न्युष बलिं ततः परिषिञ्चति ।

## Khanda 8

1 · · त्रिप्रकारस्यान्नस्य प्रकृतत्वादन्नेनेत्येव सिद्धे त्रिवृतेति वचनमन्यत्र त्रिवृद्ग्रहण एषां संप्रत्ययार्थम् । यथा तथैव त्रिवृतान्नेनेति । इहापि देवतोपस्थानं कर्तव्यमित्येकेषाम् । · ·

2 गुडादिरिक्षुविकारः क्षारस्ततोन्यदक्षारम् । · · · · · मृन्मयेन पिबतीति मृन्मयपायी · · । पानं भोजनोपलक्षणार्थं शरावादावभुञ्जान इत्यर्थः । उच्छिष्टं भुक्तशेषस्तदस्यास्तीत्युच्छिष्टी । न भवति शूद्र उच्छिष्टी । अदाता शूद्रायोच्छिष्टमित्यर्थः । · · · · · उभौ कालौ सायं प्रातः । भिक्षया

याचनेन चरितव्यं भिक्षाचरणद्रव्यमित्यर्थः । उदकुम्भमिति । इतिशब्दः प्रकारार्थः । अन्यदप्युपकारकमाहरेदाचार्याय । ˙˙ काष्ठकलापः काष्ठसमूहस्तमाहरेत् । उभौ कालौ सायं प्रातः सायमेव वा समिधो वक्ष्यमाणा अभ्यादधाति । सायं सायमिति वीप्सावचनमादिविकल्पार्थम् । आदित आरभ्या समावर्तनादेक एव पक्षो भवति । ˙˙

3 ˙˙ परिमृज्य सोदकेन पाणिना संमृज्य ˙˙˙˙˙

4 ˙˙ अष्टौ समिधोभ्यादधाति ।

5 तथैव यथा इ तदिति (su 3) ˙˙˙

6 एवं समिध आधायैतमग्निम् ˙˙ उपतिष्ठते । ˙˙˙˙˙

7 ˙˙ तथैव तेनैव प्रकारेणोपस्थितेन ओदनस्येत्येवमादिना (I, 7, 18) । ˙˙˙ तत्र परिवेषणवचनादेव सिद्धे होमे तथेति वचनमाघारातिदेशार्थं तेनोपनयनाग्नावेवान्नहोमः । व्यक्तं च बौधायनीये ग्रहं धारणमुक्तम् (Baudh. II, 8) । ˙˙˙˙ केचिद्व्रतोपायनविसर्गेषु व्रतस्य नामोपदिशन्ति । यथा सावित्र्या व्रतं चरिष्यामीति व्रतमचारिषमिति च । तद्व्रतस्य ज्ञानं भवतीति । तन्न वचनाभावात् । ˙˙

8. एतदिति प्रकृतं सावित्रं व्रतमक्षारलवणभोजनादि प्रति निर्दिश्यते । एतद्व्रतं यस्य सोयमेतद्व्रतः । एतद्व्रत एवात ऊर्ध्वमपि स्यात् । एवकारकरणं वक्ष्यमाणान्यपि व्रतानि ग्रहे स्युरित्येतदर्थम् । ˙˙

9 द्वौ ब्रह्मचारिणावाचार्यकुलवासी नैष्ठिकश्च । तयोर्या विद्यार्थमेवाचार्यकुले वसति स आचार्यकुलवासी यस्त्वाश्रमाद्यूर्ध्वमपि विद्याक्रियायां [या] ब्रह्मचर्यं चरति स

नैष्ठिकः । तयोराचार्यकुलवास्यश्नाति क्षारं०० । अपरा व्याख्या । एतद्व्रत० ०कुलवासी । एतद्व्रत एवात ऊर्ध्वमपि सन्नाचार्यस्य गृहवासी । प्राक् ग्रहादुपनयनस्या समाप्तत्वात्पितुरेव कुले वासस्तत ऊर्ध्वमाचार्यकुलवास एव न पितुर्गृहे । किं सर्वाणि सावित्रव्रतानि भवन्ति । नेत्याह । अश्नाति क्षारं०० । अथवैक एवार्थयोगः । एतद्व्रत०० धान्यमिति । एतद्व्रत एवं भूत्वाचार्यकुले वसन्क्षारादीन्यश्नातीत्यर्थः । एतयोर्व्याख्यानयोर्धर्मेषु क्षारलवणप्रतिषेधः किमर्थः । नानु० (Dh I, 2, 22; 23) । अनशने फलमूलाशने न दोष इत्येतदर्थः । प्रथमे व्याख्याने कथमाचार्यकुलवासः सिध्यति । उपेत० (Dh I, 2, 11) ।

11 ·· शिखामेव धारयेदितरान्केशान्वापयेदित्यर्थः ।

12 ·· वस्त्र आच्छादयति । काषायग्रहणं प्रदर्शनमात्रं माञ्जिष्ठं हारिद्रमिति यथावर्णं भवति । एवं पूर्वत्र धर्मेषु (Dh I, 3, 1, 2) ।

14 ·· एकस्य द्वयोस्त्रयाणां चतुर्णां वाध्ययने विकल्पेनेति विकल्पा इति केचित् । अपरे प्रतिवेदं द्वादशेति तत्र त्रयाणामध्ययने षट्त्रिंशतं [sic] भवति धर्मपूक्तत्वात् (Dh I, 2, 13) । यावद्ग्रहणं तु सर्वत्र विशेषः । तस्मिन्नपि पक्षे द्वादशस्योर्ध्वं यावद्ग्रहणं वा द्वादशवरार्ध्यमिति धर्मे वचनात् (Dh I, 2, 16) । अन्य आहुः विनिवेशविकल्पा एते तुल्यविकल्पत्वे कृष्णकेशोग्नीनादधीतेति श्रुत्या विरोधात् । · · · · ·

15 ·· किमर्थमेतत् । इहानुक्तान्यपि व्रतानि धर्मेभ्य

आगमस्य तैरपि व्रतवान्स्यादित्येतदर्थम्। अनुदितमेव सि-
द्धमेव। ·····

16 चत्वारि काण्डानि प्राजापत्यं सौम्यमाग्नेयं वैश्वदे-
वमिति। पञ्चमं स्वायंभुवमेके। तेषामनुक्रमणं काण्डानु-
क्रमणे द्रष्टव्यम्। तेषां काण्डानामुपाकरणं काण्डोपाकरणं
तस्मिन्काण्डोपाकरणे काण्डव्रतारम्भ इत्यर्थः। काण्डानां वि-
सर्गः काण्डव्रतविसर्गः। तस्मिंश्च व्याहृतिपर्यन्तं कृत्वा सद-
सस्पतिं जुहोति काण्डर्षिं जुहोति। ···· केचित्सदसस्पति-
मिति काण्डर्षिद्वितीय इति वर्णयन्ति। तेषामादौ काण्डर्षिं
हुत्वा सदसस्पतेरिहैव होमः। अत्र द्वितीयवचन[नं] प्रसिद्धस्य
काण्डर्षेः प्राथम्यार्थम्। ·····

## Khanda 9

1. ··स्नानादिमला[माला]न्तं स्नानं गुरुकुलात्समावर्त-
नमित्यर्थः। तदधीत्य वेदं वेदौ वेदान्वा कर्तव्यं प्रतिवेदमिति
जातिनिर्देशः।

3. ··· वाशब्दः स्नानस्य विकल्पार्थः स्नायान्न वा स्ना-
यादिति। तेन यस्य कर्मस्वधिकारो नास्ति तस्य नैष्ठिक-
ब्रह्मचर्यमेव स्यात्। अनुक्रमणादेव सिद्ध एतेष्विति वचनं
रोहिण्यादिष्वसंभवे तादृशेष्वप्यन्येषु पुण्येषु स्नायादिति।···

4 यस्य भूतलस्य समीप आपो भवन्ति तद्गत्वा सामर्थ्या-
च्चेति गम्यते। अथ यस्य देशस्य समीप आपः सामर्थ्यात्त
देशं गत्वा। ··· यत्राग्निमुपसमाधायेत्युच्यते तत्रोद्धननादिना

संस्कृते देशेऽग्निमाहृत्य स्थापयित्वाग्नौ होमः । यत्र नोच्यते तत्र स्वस्थानेवस्थिते परिस्तरणादिना कार्यम् । · · · · ·

5. · · जुहोत्याज्यहोमार्थम् ।

8 · · · अष्टाचत्वारिंशत्परिमाण उपनयन उपेतस्य ब्रह्मचर्यव्रतस्यायं विसर्गः ।

9. · · व्रतं विसृज्येति वचनमुक्तानां वक्ष्यमाणानां च पदार्थानामाम्नातैव कर्ता नाध्या[पयि]तेति ख्यापनार्थम् । अन्यथाचार्यो होमं कुर्यादित्याशङ्का स्यात् । काण्डोपाकरण-विसर्गादिष्वाचार्यकर्तृकत्वं तस्य दृष्टमिति । तस्मादनुज्ञाप्याचार्यं तस्मिन्नुपद्रष्टरि स्वयमेवेदं कर्म कुर्यात् ।

10 · · · · · वि मध्यमं श्रथायेति मन्त्रपूर्वयार्थावदुक्तमित्येके । अपरेऽनुषङ्गो वाक्यपरिसमाप्तिरित्येतेन न्यायेन वरुण पाशमस्मच्छ्रथायेति च सर्वमन्त्रानुषङ्ग इति । यथा । उदुत्तमं व॰ पा॰ ०य ॥ अवाधमं व॰ पा॰ ०य ॥ वि मध्यमं व॰ पा॰ ०थायेति । · · अप्सु प्रवेश्य प्रक्षाप्योत्तरीयमर्थिने दद्यात् । · ·

11. तं क्षुरं वप्त्रे नापिताय प्रदायोन्दनीयाश्छेदनार्हाः शीतोष्णा अपोभिमृशति । · · · ·

15 · · उन्दनादिवपनान्तं वप्तुः कर्म । मन्त्रास्त्वाचार्यस्येत्येके । तन्न वचनसामर्थ्यात्सांनाय्यदोहनादिष्विव वप्तुर्मन्त्राध्ययनं भविष्यति ।

17. वापयतीति [sic] सर्वत्र शेषः । · · ·

18 · · · संयम्य निधायान्तर्भूतानि कृत्वा · · निखनति । अवटं खात्वायेण निधाय पुरीषेण प्रच्छादयतीत्यर्थः । अमु-

र्येति स्नातुः पश्चा नाम्नो ग्रहणम् । अमुष्यायमामुष्यायण इति । तथैव गोत्रनाम । यथा । इदमहं देवदत्तस्य कौडि-[कौण्डि]न्यस्य पाप्मानमवगूहामीति । · ·

## Khanda 10

1 स्नात्यनेनेति स्नानीयं तच्चूर्णकल्कादि । स्नायनीयमि-त्यपपाठः । अथवा स्नायः स्नानं स्नातीत्यनर्थान्तरम् । स्नायं करोतीति एयुट्चेत्युत्पन्ने (Pân III, 1, 147) तदन्तात्कृत्ये स्ना-यनीयमित्यपि स्यात् । · ·

2 · · सर्वान्ते स्नानं वचनादेकस्य कर्मणो बहुमन्त्र-त्वम् । केचित्प्रतिमन्त्रं स्नानमिच्छन्ति । तत्र नास्ति प्रमा-णम् । · · ·

3 · सर्वतः परिश्रित्योपरिष्टाच्च निश्छिद्रं प्रच्छादयि-त्वा [sic] । · तत्रोपसमाधानादि सर्वं क्रियते । · · स्नातानां ब्रह्मचारिणां वै तेजसा हतो नैष तपति । कः । य एष इमं लोकं तपत्यादित्यः । तस्मात्स्नातकस्य मुखं रेफायतीव दीप्य-तीव [sic] । अस्य तेजस आदित्येन हरं [हरणं] मा भूदिति । · ·

4 · · सर्वसुरभि सर्वसुगन्धि द्रव्यम् । · तदद्भिरभ्युक्ष्य तेन पाणी प्रलिप्य । · अनुलोममात्मानं लिम्पते । अथ-वाभ्युक्ष्य नमस्कृत्य पाणी प्रलिप्यानुलिम्पते । · ·

5 · · · अप उपस्पृश्याचम्येत्यर्थः · · · अपरेणाग्निमि-ति वचनादनुलेपनवस्त्रपरिधाने स्नानप्रदेश एव गम्यते ।

6 · · चान्दनश्चासौ मणिश्च चान्दनमणिस्तं चादरं वैत-मेव मणिम् । · तस्य मणेरुपरिष्टात्कोष्ठप्रदेशे सुवर्णेन च्छा-

दितं सुषिरं सूत्रेण प्रोतश्च भवतीत्यर्थः। तदुभयं कुण्डलयुगलं मणिं च। ` ` अभ्युपरि तस्य। ` तदुभयमभिजुहोति। अथवोभयमुपरि धारयंस्तदभि तस्योपरिष्टादग्नौ जुहोति। मणिकुण्डलसंस्कारत्वात्परिषेकाभावः। पूर्वसंस्कृतमाज्यमवशेष्य तेन जुहोति।

## Khanda 11

1 ` अनुपरिप्लाव्याज्यं प्रक्षाल्येत्यर्थः। अस्वाहाकारवचनं मन्त्रे मन्त्रे पादान्ते। ` ` प्रतिहरत आबध्नाति। ` प्रतिकुण्डलं मन्त्रावृत्तिः।

2 ` संगृह्णीतेपिधानेनापिदधाति। ` `

3 ` प्रतिमुञ्चते बध्नाति।

4 ` प्रतिमुञ्चते शिरसि। प्रसिद्धस्तस्यां मालाशब्दो (ये)न केनचिदुपायेन प्रयोक्तव्यः प्रयोगे तेनैव स्रगित्यभिधापयितव्यमिति।

5 ` ` ` सव्यं पूर्वमाचारादपरिमितकृत्वश्च। सव्यं हि पूर्वं मनुष्या आञ्जतेपरिमितं हि मनुष्या आञ्जत इत्यनुवादाच्च। तत्र सव्येपि वा(म)मिति (द्वयं) युगपदशक्यत्वात्प्रतिचक्षुर्मन्त्रावृत्तिः। पुनः पुनरप्यावृत्तौ चक्षुःसंस्कारकत्वाद्यत्रैकार्थ्यमिति न्यायेन सकृदेव मन्त्रो द्वाभ्यां हस्ताभ्यां द्वयोरक्ष्णोर्युगपदाञ्जनस्य शक्यत्वान्न मन्त्रावृत्तिरित्येके।

8 ` ` प्रतिहरते प्रतिभ्रमयति। सकृदेव मन्त्रः।

9 ` अध्यवरोहत्युपमुञ्चत इत्यर्थः। युगपदशक्यत्वान्मन्त्रावृत्तिः। शक्ये सकृदेव।

11 · प्रायश्चित्तमेतत् । आ मधुपर्कसमाप्तेः सति निमित्ते । यावज्जीवमित्यपरे स्नातकस्य नित्यत्वाद्वेणुदण्डधारणस्य । · ·

## Khanda 12

2 · · ग्रामं प्रविशति ।

3 · · तत्र तैत्तिरीयाणां मयोसीत्येतत्तृतीयं नाम पठितं नास्ति वाजसनेयिनां चतुर्थमेतत्पठितम् । येषां तृतीयमस्याम्नानं यथा तेषां पाठस्तथा ग्राह्याणि । केचिदश्वोसि हयोस्यत्योसि नरोसीत्येवं ययुर्नामासीत्येतदन्तानि यथा तैत्तिरीयाणां पाठस्तथा गृह्णन्ति ।

5 · ·अपचितिं पूजाम् ।

6 · · आरोहणानन्तरमेव । केचिद्गच्छतीत्युक्त्वा वचनाद्गच्छन्नेवोपतिष्ठत इत्याहुः ।

7 अवरुह्यैतत्कार्यमित्येकेनवरुह्येत्यपरे ।

8 अथापचितेः कर्ता प्राह । · ·

10 · वा मधुपर्कम् । बहुवचनमनियतकर्तृकत्वाय । तेन परिकर्मिभिरासादयितव्यानि मधुपर्कद्रव्याणि ।

12 · · धर्मेषु तु दधि° (Dh. II, 8, 8 9) इत्युक्तं तदनेन विकल्प[ल्प्य]ते ।

13 · · आनयति ततो घृतं पाणिभ्यादिति त्रिवृत् । पाङ्क्ते दध्यादीनां नास्ति क्रमो घृतमन्ततोभिघारणरूपत्वात् ।

14 · · अनूचीनानि वक्ष्यमाणान्योपूर्विकाणि । प्रदाता स्नातकेनादापयति । · · · एतानि क्रमेण सादयित्वा

पश्चादादापयति । यदि मधुपर्कस्यैव ह्रसीयस्यानीय वर्षीयसा प्रच्छादनमिष्टं तत एवं कर्तव्यम् । ह्रसीयसि कांस्ये दध्यानीय मध्वानयति वर्षीयसापिधाय । अनूचीनानीति गुरुनिर्देशस्य प्रयोजनं पाद्यार्घ्याचमनीयानामपि ह्रसीयस्यानीय वर्षीयसापिधानार्थम् । तेषां तु कांस्यनियमो नास्ति । · · ·

15 अन्वङ्ङनुगच्छन्नादातुरभिप्रायानुकूलो भूत्वेत्यर्थः । अनुसंव्रजिना सह कूर्चादिना द्रव्येण तदग्रतः कृतानुगन्ता । अनुसंवृजिनेति प्रमादपाठः । संप्रदातानुषकिंचया न विद्यत उपघातिका वाग्यस्य सेयमनुषकिंचा वाक् । पृषोदरादिकोधिकारो द्रष्टव्यः (Pān VI, 3, 109) । वाचोत्तरेणानुपहतयोच्चैर्भूतयेत्यर्थः । वाचैकैकं प्राह कूर्चादिकं द्रव्यम् । केचिदनुसंव्रजिनेति पाठान्तरं कृत्वा वाग्विशेषणमिच्छन्ति । यथा मृष्टा वाक्संस्कृता वाक्तथा चेति । अपरे यथापाठमेवमर्थमिच्छन्ति । एकैकमिति यौगपद्यप्रतिषेधार्थमिति केचित् । पृथग्वचनादुत्तरच कूर्चादीनां प्रत्येकं वचनाच्च सिध्यति । यथेदं प्रयोजनद्रव्यस्यैकत्वं नियतं शब्दस्याभ्यावृत्तिर्वा स्यादिति । तेन त्रिस्त्रिरथैकैकं प्राह । अथवैकैकमिति वचनमेकैकमसकृत्प्रवचनं द्विरिति । तेनाचमनीयस्य नास्ति द्वितीयं प्रवचनम् ।

17. · · · · उदङ्मुख इह कूर्चः स्याद्दक्चानामुक्तत्वात् (Āśv I 24, 8) ।

19. · · इतरयोः । राजन्यवैश्ययोः ।

## Khanda 13

1 ˙˙ प्रक्षालयितुर्हस्तावित्येव सिद्धे योऽस्य पादावित्येवमादिवचनं प्रक्षालयितुरनियमार्थम्। तेन ब्राह्मणस्य ब्राह्मणो वा प्रक्षालयेत्। तदुक्तं बह्वृचानाम् (Asv I, 24, 11, 12)।

2 ˙˙ अर्घ्येणोदकेन गन्धमाल्यवस्त्रालंकारयुक्तेन सहागत्यार्घ्यमिति प्राह। केचिदर्घ इति प्राहेति पाठं मन्यन्ते पूर्वत्रार्घ्यमाचमनीयमित्युक्तत्वात् (I, 12, 14)। तन्न। अर्हत्यनेनेति पूजार्थस्य द्रव्यसमूहस्यार्घशब्देनाभिवदितत्वा[sic]दशक्यस्तदेकदेश उदके पूर्वत्रार्घ्यार्थत्वादर्घ्यशब्दप्रयोगस्योपपन्नत्वाच्च।

3 तदर्घ्यादिद्रव्यम्। ˙˙

4 ˙˙ शिष्टमुदकं प्रदात्रे प्रदाय तदुदकं तेन निनीयमानम् ˙˙ अभिमन्त्रयते।

6 ˙˙ तदित्येकदेशसमुदायशब्दः (su 3)। उत्तरत्राप्याचमनवचनादर्धमेव गृहीत्वावशिष्टं प्रदात्रे प्रदायाचामति।

8 ˙˙ उभाभ्यामाकाशाञ्जलिना प्रतिगृह्य। ˙˙ संमृज्यालोड्य। ˙˙

9 ˙˙ अभावे विकल्प एषः। गतेरभावे सर्वप्राशनं बह्वृचानामप्युक्तम् (Asv I, 24, 26, 27)। ˙˙ अप आचामति। तेनाचमनीयस्यावशिष्टा अप आचामति। ˙˙˙˙˙

10 अथास्मै गामुक्षाणं वेहतं वानीय गौरिति प्राह। तद्यथादौ मनुष्यराजस्यागतेष्वन्यस्मिन्वार्हत्युक्षाणं वा वेहतं वा दादन्त एवमेवास्मा एतत्दादन्ते। यदग्निं मन्यत्यग्निर्हि

देवानां पशुरित्यातिथ्यायामग्निमन्थनवाक्यशेषे नित्यानुवादवचनाभावात्। अस्माकं गोमात्रमेव सा च स्त्र्येव मन्त्रलिङ्गात्। स्त्रीलिङ्गनिर्देशाच्चेत्येके।

11. तस्याः। गोः कर्मसंज्ञपनक्रियायां सोर्थः स्यादुत्सर्गे यथेष्टचर्यार्थः।

12. ` ` तस्मिन्मन्त्रे प्र णु वोचमिति यः पाठः स साधुस्तोपपाठः। केचित्सर्वेण मन्त्रेण संशासनमिच्छन्ति। तदयुक्तं प्रणवादेरेव संशासनत्वात्। भूतिकर्मस्वेतदादीन्येव वाक्यानि स्युरिति धर्मेषु वचनाद्ऋचानां पूर्वस्य जपवचनाच्च (Dh. I, 13, 8; Âśv. I, 24, 32)।

13. ` ` तत्र मन्त्रेमुष्य चेत्येतत्पूजयितुर्नाम षष्ठ्या गृह्णाति यथा मम च देवदत्तस्य चेति। अत्राह। ओमुत्सृजतेत्युत्सर्गे संशास्ति कुरुतेति कारयिष्यन्नित्येतावता सिद्धे तस्याः कर्मोत्सर्गे[र्गे इ]त्यनर्थकम्। नानर्थकं क्रियावदुत्सर्गस्यापि सुरूपत्वख्यापनार्थत्वात्। तेन नोत्सृष्टा स्वामिनादातव्या। इतरस्य स्वं स्यादर्हणार्थत्वात्। तस्यापि न स्वं तेनोत्सृष्टत्वात्कस्यचित्स्वस्वत्वाद्ग्रामादिवदित्यपरे। अन्ये हिंसाप्रतिषेधार्थ उत्सर्गः। स्वामिन एव स्वत्वम्। अन्ये स्त्रीत्वख्यापनार्थं तस्याः कर्मोत्सर्गो वेति वचनमिति पुंस्त्वेपि गोजातिमात्रस्य विवक्षितत्वाच्छ्रुतित्वाच्च। धेनुर्भव्येत्यादेरनुवृत्तिरेव जपस्य। अथ किमर्थं कर्मोत्सर्गे[र्गे इ]ति पूर्वमुक्त्वा पश्चात्क्रमविपर्यासेनोत्सर्गस्य विधिः प्रथममुच्यते। दृष्टाभावाद्धिंसाभविष्याया उत्सर्गकरणं बलीय(त), इति ख्यापनार्थम्।

15 ˙˙ अथाहैनं ब्राह्मणं भोजयतेति ।

16 ˙˙ अनूचीनं च तत्सर्वं व्रजिनं चानुसंव्रजिनम् । अनुसंवृजिनमित्यपपाठः । शेषभूतं व्यञ्जनैः संगतमित्यर्थः । पृष्ठं सव्यञ्जनमनुसंव्रजिनमित्येके पाठान्तरं कृत्वा । अन्ये यथापाठमेवामुमर्थमिच्छन्ति । ˙˙ आहारयति पूजयिता हेतुकर्तृत्वादन्यः संस्कारकर्ताहरति ।

18 ˙˙ अन्नपानीय एवोच्छिष्टदानं न सुरादावाचारविरोधान्नापि शूद्राय ज्ञातित्वाभावात् ।

## Khanda 14

1 यं रात्रिं न विच्छिद्येत मदधीनः स्यादिति कामयेत स्वयमाचम्य तस्य यतोच्छिष्टस्य भुक्तवत आचान्तस्य दक्षिणं हस्तम् ˙˙ गृह्णीयात् । तत्रासाविति संबुद्ध्या रातेर्नाम गृह्णाति । आचम्येत्यनुवर्तमाने पूजयिता पूज्यस्य हस्तं गृह्णीयादिति । तन्मा भूत् । अतः पूज्य एव रातेर्गृह्णीयादित्येतदर्थम् । हस्तग्रहणमनित्यं काम्यत्वात् । ˙˙

2 यममात्यमन्तेवासिनम् । शिष्यान्तेवासिनौ । इदं वेदाध्ययनम् । यो गुरुकुले वसति स शिष्यो योधीत्य वेदं श्रवणार्थं सोन्तेवासी । यत्रोभयोर्ग्रहणं तत्रैष भेदः शिष्यान्तेवासिन इत्यादौ । यत्रान्यतरस्य ग्रहणं तत्रोभयोरपि संप्रत्ययः । प्रेष्यं दासादिकर्मकरं कामयेत भुयो नित्योनपाय्यनपक्रमणीयो मे मम स्यादिति । ˙˙ रात्रौ निशायामष्टमे मुहूर्ते प्रदोषान्ते वा । ˙˙ जीवतः पशोः शृङ्ग उदकं गृहीत्वा छि-

द्रेण तत्प्रस्राव्य तेनोदकेनाथवा जीवशृङ्गे प्रस्राव्य मूत्रयि-त्वाचम्य तेन मूत्रेण परिषिञ्चन्परिक्रामेत् । · · तत्रास्ति क-श्चिदनपायी ध्रुवो मरणादीनामस्ति ध्रुवो दीर्घायुरनपायीति तस्मादिदमुभयमुक्तम् । अथ द्विरावसथग्रहणं किमर्थम् । पूर्वं वेश्मार्थमुत्तरं शालार्थम् ।

.3 परिषिच्य तज्जीवशृङ्गमनिगुप्तेरक्षितेपरिगृहीते देशे बहिर्वेश्म गोमार्गादौ निदधाति ।

4 यस्मै यदर्थं वर्तमानाय यस्य वा षष्ठ्यर्थे चतुर्थी । · · परिक्रोशेत्सर्वत आह्वयेत् । · ·

5 · · आकृष्यन्तेऽनेनामात्यादय इत्याकर्षो [sic] ज्ञानार्थमा-कर्षग्रहणम् । केचिदाकृष्यन्तेऽस्मिञ्छरा इत्याकर्षो न्यूनं फलकं दर्व्याः स्थान इत्यर्थं मन्यन्ते । अगारं प्रविश्येति वचनं बहिः-प्रसक्तमिति ख्यापनार्थम् । तस्माद्यां दिशं ते गता बहिर्या-मात्स्थित्वा परिक्रोशनं कर्तव्यम् । आपूर्विकोयं दर्विहोमः समिदाधानलिङ्गात् ।

6 · · अतो हेतौ । यस्मादप्रमत्ता रक्षतेत्येवमादिवच-नाद्दाराः प्रयत्नेन रक्षितव्यास्तस्माद्दारगुप्तिरिदमु[त्यु]त्तरं वक्ष्यत इति (Dh. II, 13, 7, where however the text gives रक्षथ) ।

7. स्यूरा दृढाः । स्यूराः शतप्रद्यस्ताश्चूर्णानि कारयित्वा । यस्य गृहे जारो विद्यते स जारी । स एवं कृत्वा तानि चूर्णा-नि सुप्तायै सुप्ताया भार्याया योनिमुपवपेद्योन्यां प्रक्षिपेत् । · · देशान्तरं जिगमिषुणैतत्कर्तव्यम् । एवं कृत उपगमनासमर्था योनिर्भवतीत्युपदिशन्ति । पुनरागत्य वस्तमूत्रेण प्रक्षालये-

दित्यापस्तम्बेनोक्तम् (Ap 23, 4 however वभ्रूमूत्रेण) । कर्मसिद्धौ वस्तमूत्रेण प्रक्षालयेदित्यौषधं किलैतस्य ।

8 ·· पण्यसिद्धिम् [sic] । महार्घमाशुविक्रयश्च पण्यसिद्धिः । ··

## Khanda 15

1 पण्यस्य होमार्हस्य सर्वस्यैकदेशमादाय · एकामाहुतिं जुहोत्यौपासने । अयमर्थापूर्विकः । अन्ये त्वाहुः पण्यस्यैकदेशं यावद्विक्रेतव्यं तावदपादाय विक्रयार्थं जिगमिषुरेतामाहुतिमाज्येन हुत्वा गच्छेदिति । तेषां विशेषलिङ्गाभावादाघारादापूर्विकोयं स्यात् ।

4 संवादो द्रव्यविषयो ज्ञानविषयो वा विवादस्तस्याभिजयनमभिभूय प्रतिवादिनमात्मनो जयः । ··

5 प्रत्यासन्ने जयपराजयकाले कस्यांचिन्निगाग्रामन्तरागार आत्मनो गृहमध्ये ·· कारवीरबीजमादाय तैः ·· दर्व्या जुहोति । तत्रासावित्यत्र प्रथमया वादिनो नाम गृह्णाति । ततो वारुण्यादिपरिषेकान्तं स्यात् ।

6 ·· प्रविश्य सभासंनिधौ समीप एनं प्रतिवादिनमभिवीक्षमाणो जपति । · तत्रासाविति संबुद्ध्या तस्य नामग्रहणम् । यथाधरो मत्पद्यस्व देवदत्तेति ।

8 ·· परिषदं सभ्यान्पुरुषानभिवीक्षते । एवं कुर्वाणः प्रतिवादिनमभिजयत्येवेत्यर्थवादः ।

## Khaṇḍa 16.

1. अथ पुरुषप्रायश्चित्तानि वक्ष्यन्ते तानि सर्वाणि ब्रह्मचारिणोपि स्युः ॥ दर्श इत्यादि। दर्शमावास्यायां समीपे प्रतिपद्यस्मिन्नहनि प्रथमं चन्द्रमसं दृष्ट्वा ·· अप्मे हस्ताभ्यां धार्यमाणः ··· उपतिष्ठते । सं त इत्यनया । साहचर्यादेषा याह्या ।

2. जञ्जभ्यमानस्यास्य वशेन विवरणं कृत्वा मयि दक्षक्रतू [इति] जपति । यद्यपीदमिहोक्तं दर्शपूर्णमासप्रकरणे तत्रैव श्रवणात्पुरुषाणां स्याद्विरोधाभावादित्येके। एष एव न्याय्यो निर्णयोसर्वार्थ एव तथावचनादित्यपरे । तत्रापि याजमानमा[न आ]पस्तम्ब आह। ऋत्विजामपि भवेदित्येतदर्थमिह वचनमित्यन्ये। (Nothing is found in Āp. Śr. S. IV.)

3. सिगसीत्येनं परास्छादितेनोत्तरीयेण वाससाधिक्षिप्त उपरिक्षिप्तो जपति । उत्तरीयेण चेत्येक उत्तरसिचेति प्रयोगे दृष्ट इति। सर्वत्र नानाकर्मार्थत्वादविकाराभावात्पुनः पुनर्जपतीति वचनात्।

4. ·· तस्य वाससः। ··

5. ·· वयसा पक्षिणा तन्मूत्रेण पुरीषेण वोपरिक्षिप्तो जपति।

6. ·· पुर ईहण इत्यविज्ञातः। ·· अभिच्छादयेदुपरि छादति। ··

7. यद्येनमविज्ञातमविज्ञातेनागतं फलमुपरि पतेत्। ··

8. ·· अप[व]क्रम्य परिक्रम्य ··

9. ˙˙ अवक्रम्य जपति।

10. नमः सर्पसद् इति सर्पसृप्ते देशे जपति। तमवक्रम्येति। सप्तम्या निर्देशोधिष्ठाने लङ्घने च प्रायश्चित्तार्थः समानप्रकारत्वादधिकारानुवृत्तिरवचनानां कर्मत्वेपि।

11. ˙˙ संवर्तवातो मण्डलीभूतो वातः। ˙˙

13. चित्यं वायनीमं [चायनीयं] पूजनीयं संनिहितदेवताकं देशं देवयजनं वा यज्ञभूमिं वनस्पतिं वा पुराणं वृक्षमभिलक्षितमभिक्रम्य ˙˙

14. ˙˙ धर्मेषु (Dh. II, 12, 14) वचनादेव सिद्ध इह वचनं विशिष्टविषयत्वख्यापनार्थम्। तेन कर्मश्रान्तस्य न स्यात्। उक्तं बह्वृचानामभ्यु॰ (Āśv. III, 7, 2)।

15. ˙˙˙˙˙ इदं तु धर्मपूक्तेनानशनेन विकल्प्यते। व्याधितस्य चाभ्युदयास्तमयात्प्रायश्चित्तं न स्याद्बह्वृचानामित्युक्तम् (Āśv. III, 7, 1)। प्राणायामश्चोभयत्र धर्मपूक्तो विकल्पेन स्यात् (Dh II, 12, 15)।

16. ˙˙ दुरिष्टं दुष्कृतं दोषं यज्ञस्य [प्रति]मुञ्चीत प्राप्नुयात्। ˙˙ तत्र दुरिष्टमिति भूतविभक्त्या निर्देशात्समाप्त एव यागे प्रतिषेधः प्रायश्चित्तं च नासमाप्त इति सिद्धान्तः। अनु[नू]बन्ध्याया अक्रियायामवभृथादारभ्यायं प्रतिषेधः।

18 ˙˙ अनभिप्रेतमनिष्टं शकुनमुपलभ्य तं प्रति तद्दोषोपशमनार्थं जपति। साम गायतीति लिङ्गाद्वाक्छ्रवण एवेदं प्रायश्चित्तमित्येके। स्तुत्यर्थं न सर्वेत्यन्ये।

19. ˙˙ एकसृकं वाश्यमानं प्रति जपति। शृगाली मृगशब्दं कुर्वाण एकसृक इत्युच्यते।

20 अथानन्तरमेकसृकाय। संप्रदानरूपत्वाच्चतुर्थी ता-दर्थ्या वा। उभयतोधस्तादुपरिष्टाच्च ··

21 अनन्तरमप उपस्पृश्येत्तमेकसृकमुपतिष्ठते विभूरसी-त्येतेनानुवाकेन रौद्रमनीकं सर्वत्रानुषज्य। पूर्वापरसंबन्धार्थो-वषशब्दौ। तेनोल्मुकाभावे सर्वं लुप्यते।

## Khaṇḍa 17

1 · सलावृकीं वाश्यमानां प्रति जपति। आरण्यः श्वा सलावृकस्तस्य स्त्री सलावृकी। जातिमात्रं विवक्षितं न स्त्रीत्वमित्येके।

2 ·· शकुनिर्ध्वाङ्क्षः। तस्य शकुननिमित्त एव शब्दे जपो न काकशब्दे। अभिप्रेते तु स्वरे भवत्येव जपः। अन-भिप्रेते पूर्वश्चायं च। (सा) केचित्सर्वेष्वेवानभिप्रेतमित्यनु-वर्तयन्ति। तेषामभिप्रेते न स्यात्। शकुनौ पूर्वे नैतद्बाध्यते।

3 ·· पिङ्गलेन[लं] वाश्यमानं प्रति जपति। उलूकः पिङ्गलेत्युच्यते। ··

4 ·· स्वाहाकारत्रयस्य दर्शनात्तिस्र एता आज्याहुतय इत्येके। मन्त्रचतुष्टयाच्चतस्रो न्याय्याः। बह्वृचानां हि पुनर्मा-मित्येकेषां कल्पज्ञानां पृथङ्मन्त्रो दृष्टः (Āsv. III, 6, 8)। त-स्मादस्यान्ते परिभाषायाः स्वाहाकारः कर्तव्यः। यथा या तिरश्चीत्यत्रायमापूर्विको दर्विहोमः (I, 2, 18)।

5 ·· कृत्वा [कुम्भां] यरुष(?)ः कपोतो गर्हितः पतंग आरण्यः पारापतः। उपाविक्षद्ध्यासितवान्। आगारप्रवे-शोपलक्षणस्यायमि[णार्थमि]दम्। एतद्यु[दु]क्तं बह्वृचानां

कपो° (Asv III, 7, 7) । मधुकरीभिः क्रियमाणमध्यागार उपाविक्षदुपविष्टवान् [sic] । गौर्वत्सादन्यां गामधेधीत्यिब- ति । स्थूणा ब्यरौक्षीद्गृहोपरि रूढवती [sic] । वल्मीक उदे- क्षीद्गृह उत्थितः ।

6 एतेषां सर्वेषामिदं प्रायश्चित्तम् । अथ गवि गवा धीतायामस्मिन्कृते देशेपि सर्वमुच्यते ।

Khanda 18

2 अपराह्णे गृहं प्रत्यागच्छन्तीर्गाः प्रतीक्षते ।

3 आगत्य सहस्थिता गाः प्रतीक्षते ।

4 गोष्ठं गताः प्रतीक्षते । अयन्तामित्येतदन्तो द्वि- तीयो मन्त्र. । यदे[यद्ये]वमग्निहोत्रोपस्थानेस्यैकमन्त्रत्वाद्द्वि- तीयस्यादिग्रहणं चकारेण चानर्थकम् । एवं तर्हि । तथा- पि द्वावेवोचितौ मन्त्रौ गोष्ठोपस्थानाविति ख्यापनार्थम् । अथवा सहस्रपोषं वः पुष्यासमिति चेत्येतदन्तं सूत्रमिहैत- दन्तो मन्त्र इत्येतदर्थं द्वितीयग्रहणम् । तथा सति मयि वो रायः श्रयन्तामित्येतस्य लोपश्चकारकरणं चानर्थकं स्यात् ।

5 गवां मध्ये गोष्ठे ।

6 वारुण्याद्याज्येन स्विष्टकृत् । पयसेत्येके प्रधानशे- षातस्य क्रियेति मन्यमानाः । न । पाकयज्ञ इत्येतदस्ति शे- षात्स्विष्टकृतं यजति प्रणीताभिः संयौतीति च । यदि हि स्यादाज्यहोमेषु स्विष्टकृन्न स्यात्प्रणयनं च । दृश्यते चोभय- मुपनयनादौ । तस्माद्यच वचनं नास्ति तत्राज्येनैव स्विष्ट- कृदिति सिद्धान्तः ।

## Khanda 19

1 उपनयनप्रभृति ब्रह्मचार्याचार्याधीनः सन्कृतविद्य आचार्यकुलात्समावृत्तः स्नातक इत्यर्थः । स मातापितरौ शुश्रूषयन्धान्याहरणादिना विभृयात्पोषयेन्मातापित्रधीनः स्यादित्यर्थः । · ·

2 · · उपयच्छेत्स्वीकुर्यात् । कीदृशीम् । सजातां सवर्णां समानाभिजनां च । नग्निकामासन्नार्तवाम् । नग्नपतिरपि परिपठितो वस्त्रविक्षेपणार्थः । ततोर्हे ण्युक् [ण्वुच्] (Pan III, 3, 111) कर्तरि च (Pan II, 2, 16) स्यात्कृतो बहुलं कृति । तस्माद्वस्त्रविक्षेपणार्हा नग्निका मैथुनार्हेत्यर्थः । ब्रह्मचारिणीमस्पृष्टमैथुनाम् । · · · · · · ·

3 · · · · यत्कर्तव्यं कर्म तत्कर्तुं शीलं यस्य स यत्कारी सर्वाणि तेष्वेव कालेषु करणशील इत्यर्थः । स पुण्याह एव प्रशस्त एव दिने कुरुते । तत्र प्रागुदयादेका नाडिकोर्ध्वं चैका प्रातरित्युच्यते । प्राक् प्रथमाहश्चतुर्थभागान्तादेका नाडिकोर्ध्वं चैका संगवः । प्राग्द्वितीयाहस्तृतीयभागान्तादेका नाडिकोर्ध्वं चैका स मध्यंदिनः । प्राक्तृतीयादन्हश्चतुर्थभागान्तादेका नाडिकोर्ध्वं चैका सोपराह्णः । प्रागस्तमयादेका नाडिकोर्ध्वं चैका तत्सायम् । अयं सर्वकर्मणां कालो न विवाहस्यैव यत्कारीति वचनात् । · · · · ·

5 · · पतिमित्ययमपाठो व्यत्ययो वा दक्षिणेन पतिमिति वा पठितव्यम् । पतिभार्येति भविष्यद्वृत्त्या निर्देशः ।

6 सम्यगन्वारब्धः समन्वारब्धः पतिर्यस्या अस्ति सा

समन्वारब्धा । अकारो मत्वर्थीयो विभक्तिवज्ञ इति यथा समन्वारब्धा भवतीत्यर्थः । आचान्ता चासौ समन्वारब्धा चाचान्तसमन्वारब्धा । कर्माङ्गमिदमाचमनं प्रयतताया एव । ˙˙

7 अग्निरेत्विति षट् प्रधानाहुतीर्जुहोति ।

8 ˙ वधूमश्मानमास्थापयति । आतिष्ठेति यथावर्णमिह मन्त्रः ।

9 ˙˙ इयोर्दर्शयोः स्तरणात्तत्तद्वयवत्वं तेन यत्प्रत्ययः । तेषु दर्भेषु पूर्वापरौ दम्पती अवतिष्ठेते । एकत्र स्तीर्णे जायापरत्र पतिः ।

## Khanda 20

1 अपरेषु दर्भेष्ववस्थितः प्राङ्मुखः पतिः पूर्वेष्ववस्थिताया प्रत्यङ्मुखाया[sic]भार्याया हस्तं गृह्णीयात्प्रत्यङ्मुखो वा पूर्वेष्ववस्थितोपरेष्ववस्थितायाः प्राङ्मुख्याः । ˙˙ अभीव लोमान्यपर्याप्तरोमाणमङ्गुष्ठमङ्गुलीभिः सह गृह्णीयात् । ˙ यदि कामयेत पुंसो जनयेयमित्येवमादिना सिद्धे किमर्थं हस्तं गृह्णीयादित्युच्यते । कामाभावेपि हस्तग्रहणार्थम् । इतरथा हि सत्येव कामेङ्गुष्ठादीनामेव ग्रहणं स्यान्नासति कामे । ˙˙˙

2 तां भार्यामात्मनोपरेण दक्षिणेन संस्थिता प्रत्यङ्मुखी च यथा भवति तथाभ्यावृत्याभिमन्त्रयते । ˙˙ अभ्यावृत्येत्यपपाठः । प्रत्यङ्मुख' प्राङ्मुख्या वेत्यस्मिन्पक्ष इदं विधानम् । तामात्मनोपरेण दक्षिणमंसं प्रत्यङ्मुखीमवस्थाप्याभिमन्त्रयते । अथवोत्तरेण तां गत्वा प्रसव्यमावृत्य प्राङ्मु-

खो यथात्मनोयेण दक्षिणमंसं संस्थिता भवति तथा स्थित्वा प्रदक्षिणां तां प्रत्यङ्मुखीमावृत्याभिमन्त्रयते । प्राङ्मुखः प्रत्यङ्मुख्या इत्येतस्मिन्पक्षे तामीपदक्षिणेन ।

3 ·· वर एव कर्तान्यस्याश्रवणात् । अथग्रहणं परिभाषार्थम् । यत्राधारवत्यवदानं तत्रैवं यत्रावदानं चोद्यते तत्रापि । यथोदुम्बर्यां दर्व्योपस्तीर्णाभिघारितं द्रव्यमुपस्तीर्येतेषामेवान्नानां समवदायेत्यादौ । अन्य आहुः । परकृतस्थापनार्थोयशब्द इति । स चाद्यो भ्राता भ्रातृस्थानीयो वा । तस्मिञ्छा[ञ्छया]लशब्दः स्यात् । शूर्पाल्लाजानावपत्येतेन निमित्तेन प्रवृत्तमिति । शास्त्रान्तरे च तथा दृष्टम् (Asv I, 7, 8) । पूर्वस्मिन्पक्षे शा[श्या]ल आसन्नः संयोगेनेति नैदानादित्येतन्निर्वचनं द्रष्टव्यम् । द्विरिति च प्रदर्शनमात्रं त्रिः पञ्चावत्तानां स्यादावपनं वैदिके शास्त्रान्तरे च दर्शनात् (Asv I, 7, 9) ।

4 अभिघार्यावत्तानेव लाजान् । अवशिष्टानपीत्येके शास्त्रान्तरे च दर्शनात् (Asv I, 7, 10) । तस्या अञ्जलिं पूरयित्वा स्रुक्स्थानीयेन वरो जुहोति । कर्तृत्ववचनान्न सा कर्त्री वर एव कर्ता । तस्मात्तस्या हस्तावालभ्य स्वयमेव मन्त्रमुक्त्वा जुहोति ।

5 ·· स्वयमेव मन्त्रमुक्त्वा तया सह तं प्रदक्षिणमेवमग्निं परिक्रम्य तथैव लाजानावपति जुहोत्युपविश्योपस्तरणादिना धर्मेण ।

7 ·· आज्येन सौविष्टकृती द्रव्यान्तरावचनात् । केचित्तु लाजाधिकारमनुवर्त्य लाजैरिच्छन्ति लाजैरितरान्वेति

बौधायनीये दर्शनात्। तदन्यार्थं तेषां प्रधानहोमानामाज्य-
द्रव्यकत्वादनामत्वाच्च।

9 ·· क्रामयति। दीर्घोपपाठः। प्राचीमित्येके मुख-
वादं मन्यन्ते। तेषामर्थाद्दिगपि भविष्यति।

10 ·· अथेति परिषेकविसर्गादिकर्मपरिसमाप्त्या[प्त्या]-
नन्तर्यार्थम्।

## Khanda 21

1 · वर एव मन्त्राणां वक्तान्वेत्विति लिङ्गात्। परि-
गृह्यैव पादं क्रमयति(हे)त्वेति ग्रहणात्। संगासनेन मन्त्रव-
चनेन हेतुत्वात्स्वयमेव क्रामतीत्येके। सा च यथासंप्रैषं द-
क्षिणेन प्रक्रम्य सव्येनानुप्रक्रामति न सव्येन दक्षिणमति-
क्रामति।

2 जपति ·· वर एव।

3 अनन्तरं जपादस्या दक्षिणं पादमात्मनो दक्षिणेन
पादेनावक्रम्य। यथा पुरस्तादिति मन्त्रप्राप्त्यै। यद्येवं
यथा पुरस्तादित्येतेनैव सिद्धत्वाद्दक्षिणेन हस्तेनेत्याद्यनर्थ-
कम्। नानर्थकम्। मन्त्रमात्रस्यातिदेश इत्याशङ्कानिवृत्त्यर्थ-
त्वात्।

5 · यथागृहीतं प्रतिमन्त्रं प्रोक्षणम्। एकमन्त्रत्वा-
त्कर्मणामेकदृष्टाभावाच्च कर्मबहुत्वम्।

6 अथास्मिन्काले व्रीह्यादीनामोषधीनां बीजानि ज्ञा-
तयो वपन्ति जायापत्योः शिरसि क्षिपन्ति। अनेति वच-
नमाचारत एव सिद्धस्य कर्मणः कालविधानार्थम्। तेना-

न्येषामपि ग्रामकुलजनपदधर्माणां पुरस्तादुपरिष्टाच्च कर्त्तव्यानां संग्रहः सिद्धो भवति। बह्वृचानामप्युक्तमथ° (Âsv. I, 7, 1)।

## Khanda 22

1 पितुर्गृहे यत्कर्तव्यं तत्परिसमाप्येदानीं पत्युर्गृहे कर्तव्यं वक्ष्यते। तां भार्यां ततः पितुर्गृहात्प्रवाहयन्ति शकटेन रथेन वा नयन्ति ज्ञातयः प्रहारयन्ति वा पुरुषाश्वहस्तिभिर्नयन्ति वेत्यर्थः।

2 समीप्य तत एतं विवाहाग्निमनुहरन्ति जायापत्योः पृष्ठतो हरन्तीत्यर्थः।

3 नित्यो यावज्जीविकः।··

4 ··विनिवेशविकल्प एषः। यद्यादौ मथितोयं समाहितो मथितव्यो यदि लौकिक आहृतः श्रोत्रियागारादाहरणीयः। एतस्मादेव ज्ञायते। उपनयनादौ लौकिकहरणं श्रोत्रियागारादेवेति।

5 ··अहन्यनुगत आ सायमाहुतेरनशनमुपवासः। रात्रावनुगत आ प्रातराहुतेरिति। आ[अनु]गमन एकरात्रमुभयत्रेत्यपरे।

6 ··अथशब्दः प्राप्यैव स्वगृहमुत्तरं कर्म कार्यं न स्वगृह एव सर्वं विवाहकार्यमित्येतदर्थम्।··यथासंप्रैषं सा दक्षिणं पादमग्रे विहृत्यानुहृत्य पूर्वं देहलिमनधिष्ठाय प्रविशत्यग्रे। देहलिमिति च्छान्दसं ह्रस्वत्वम्।

7 ··कृत्वा देशसंस्कारं न्युप्य विवाहाग्निमुपसमादधाति।

8 अपरेण तमग्निम्··आस्तृणाति वरः।

9 ˙˙ मन्त्र उभयोः। अपरस्यां तु दिशि पत्युर्भार्योपविशति यद्युदङ्मुखौ स्याताम्। प्राङ्मुखत्वे दक्षिणतः। एवं पुनरुपविशतिग्रहणमनन्तरेण पश्चेण संबन्धार्थम्।

10 ˙˙ उदितेषु नक्षत्रेष्विति सिद्ध आ नक्षत्राणामुदयादिति वचनमहन्येव प्रवेशनमुपवेशनं च भवेतामित्येतदर्थम्।

11 ˙˙ वध्वा सह निर्गत्यागारात् ˙ उपनिष्क्रम्य यत्र नक्षत्रादीनि द्रष्टुं शक्यन्ते देवीरित्यर्धर्चेन सकृदुक्त्वा दिश उपतिष्ठते। उदितेषु नक्षत्रेष्विति वचनं सर्वोपस्थानस्य कालार्थम्। तेन पूर्वपक्ष एव विवाहो नापरपक्ष इति चन्द्रमसस्तदानुपलम्भात्। केचिदा नक्षत्राणामित्यस्य मर्यादावचननिवृत्त्यर्थं मन्यन्ते। तद्व्याख्यानतः सिध्यति। सर्वाण्युपस्थानानि पत्या कार्याण्येकवचनोपदेशात्। भार्या च समीपे तिष्ठतीत्येके। अन्ये पुरुषसंस्कारत्वाद्भार्यया कर्तव्यमविवक्षितमेकवचनमिति।

## Khanda 23

1 ˙˙ उपतिष्ठत इत्यनुवर्तमाने पुनरुपस्थायेति (चो) [स्थायेत्यु]पतिष्ठत इति वचनं पूर्वोपस्थानैरतुल्यत्वख्यापनार्थम्। तेनादर्शनकालेपि तेषामुपस्थानं तस्यां दिशि कर्तव्यम्। तच्चाप्येकेनैवोपस्थानवचनेन सिद्धे द्विरुपस्थानवचनमुभयस्याप्यतुल्यत्वख्यापनार्थम्। तेनारुन्धत्यदृश्यमानां सप्तर्षीणामुपस्थानं ध्रुवस्य केवलस्यैव।

2 अचाग्निनैवोपस्थानदेशे। मनोज्ञेन मनोहरेण मनमः

प्रियेण पुरुषेण संभाष्य। प्रतिनिवृत्यागारं प्रविश्य।... अथेति प्रवेशनान्तरं रात्रावेव क्रियार्थं श्वोभूतेहनि मा भूदिति। एनामिति स्त्रीसंस्कार एवायं विवाहैकदेश इति ख्यापनार्थम्।

3 पत्नी तदर्थान्व्रीहीनवहन्ति।

4 श्रपयित्वा। तस्मिन्नेवाग्नौ स्थालीपाकं श्रपयित्वा।... अत्र परिभाषितः स्वाहाकारः।.....

5 तेन स्थालीपाकशेषेण..

6 योस्य वस्यापचितः पूजनीय आचार्यस्थानीयो भवति। वर्तमाने निष्ठा षष्ठी च कर्तरि।... विवाहाङ्गमेतद्दानं न स्थालीपाकाङ्गम्। केचित्तेन ब्राह्मणमित्यादि योस्यापचितो भवतीत्येतदन्तं सूत्रं कुर्वन्ति। तेषामपचित एव भोजयितव्यस्तस्मा एव चर्षभो दातव्यः।

7 प्रसङ्गादेतदुच्यते।... अत ऊर्ध्वमिति वचनं दीर्घत्वादध्वनोन्यथा वा प्रागागतेपि पर्वणि स्थालीपाको मा भूदिति। अत ऊर्ध्वं चातः प्रागपि चतुर्थीहोमादागते पर्वणि भवेदित्येतदर्थम्। अन्तरेणापि नित्यत्वसिद्धे नित्यमिति वचनं यावज्जीवं तावद्वा त्रिंशद्वर्षाणि कृत्वोत्सर्गो मा भूदिति।..... आग्नेयेनेति वचनं नियमार्थं दर्शपूर्णमासदेवता मा भूवन्निति। बह्वृचानां ह्युक्तं देव° (Âsv I, 10, 4)। त्र्यृषभदानं न विद्यते योस्यापचित इति वचनाद्विवाहाङ्गत्वात्। आग्नेयेनेति वचनमाग्नेयेनैव यजते न गोदानमिति नियमार्थम्।

8... नित्यग्रहणं किमर्थम्। प्रागपि गृहप्रवेशनीयाद्धोमार्थमन्यथात ऊर्ध्वमित्यधिकारात्प्रागुक्तं स्यात्। विनि-

वर्तयामोधिकारमिति चेत्। तन्न। उत्तरत्र प्रयोजनसद्भावात्। उक्तं च बह्वृचानां पाणि॰ (Aśv I, 9, 1)। अथवापि नित्यग्रहणं यावज्जीविकत्वार्थम्। अग्निहोत्रदर्शनात्सायंप्रातर्होमस्य जीर्णस्य वा विरमणमित्याशङ्क्येत हि तन्मा भूदिति। एतेन च ज्ञायतेऽग्निहोत्रस्य कालोस्त्यापि काल इति। तेन प्रथमास्तमिते नक्षत्रं दृष्ट्वा प्रदोषे वा सायं होतव्यम्। प्रातरुषसि पुरोदयमुदिते यर्हि वाक् प्रवदेत्तर्हि होतव्यम्। सायं चारम्भो न प्रातः। ····· हस्तेनेति दर्वीनिवृत्त्यर्थम्। एते इति वचनमाहुत्योर्नियमार्थम्। तेन द्रव्यं नियतमग्निहोत्रद्रव्याणां दशानामेकं स्यात्। तदुक्तं बह्वृचानाम् (Aśv I, 9, 5, 6)।

9 सौरी सूर्यदेवत्याम्। सूर्याय स्वाहेति ···

10 ·अत ऊर्ध्वमित्यनुवृत्तेरूर्ध्वं गृहप्रवेशनीयादेव त्रिरात्रं व्रतम्। यद्येवं प्राग्व्रताभावः प्राप्नोति। एवं तर्हि योगविभागं करिष्ये। अक्षाराº ºवसत इति तेन विवाहादारभ्यैतद्व्रतं ततस्त्रिरात्रमन्तर्हितमिति। तेन प्राक् चोर्ध्वं च सिद्धं व्रतम्। पुनरेवमपि त्रिरात्रग्रहणमनर्थकं चतुर्थ्यां शेषमिति वचनादेव सिद्धत्वात्। नैष दोषो नियमार्थत्वात्। बह्वृचानामप्युक्तं त्रि॰ (Aśv I, 8, 10, 11)।

## Khanda 21

1 एतस्या रात्रेरात्यय चतुर्थ्यां रात्र्यां तृतीयस्याह्नो रात्र्यामित्यर्थः। अपररात्रे त्रिभागावशेषायां रात्र्याम्। ·· प्रायश्चित्तिपर्यन्तं कृत्वा स त्वं नो अग्न इत्येतदन्तं कृत्वा। ··

नव प्रायश्चित्तीः प्रधानाहुतयस्तासामिष्टदेशादुत्कर्षः। तस्मा-
द्याहृतिपर्यन्तं कृत्वा। इमं मे वरुणेति चतस्रो हुत्वेता जुहो-
ति। हुत्वा हुत्वा तासां संपातं पात्रान्तरेवनयति।

2 ‥ संस्रावं पात्रान्तरस्थं निहितं दर्व्या जुहोति। ‥
अथेत्यानन्तर्यार्थं कर्मशेषसमापनात्प्रागेव संस्रावहोमा भ-
वेयुरिति।

3 अथ त्वमग्ने अयासीत्येतदादिकर्मशेषं परिसमाप्यैवा-
स्मिन्नेवाग्निसमीपदेश उदपात्रं निधाय प्रदक्षिणमग्निं सो-
दपात्रं परिक्रम्यापरेणाग्निं परिश्रित्य पर्यङ्के स्वास्तरणे प्राक्-
शिरसमुदक्शिरसं वा वधूं संवेश्य शाययित्वानन्तरमस्या
योनिमभिमृशति दक्षिणेन हस्तेन। ‥

4 ‥ उपयच्छतेवकिरते मिथुनीभवति ‥

6 ईप्सत आप्नुमिच्छति योपयतीत्यर्थः। ‥ अथशब्दः
कर्मान्तरप्रतिषेधार्थः। क्षतयोनिरक्षत्यन्तस्त्रीकृता भवत्यक्ष-
तयोन्याः पत्युर्मरणोत्तरकालं पुनः संस्कृत्य परिणेतव्येति
स्मरणात्।

7 सर्वा स्त्री मलवद्वासा रजस्वली [sic]। तिस्रा रात्रीस्त-
स्मान्मलवद्वाससा न सवदेतेति प्रकृते यानि ब्राह्मणोक्तानि
व्रतानि तानि चरति (T S 2, 5, 1, 5—7)।

## Khanda 26

1 ‥ अलंकृतां माल्यानुलेपनभूषणैर्ब्राह्मणसभाया चि-
शिष्टेन ब्राह्मणेन प्रथम सभापणं कृतवती भर्ता प्रयतोपि ‥
मैथुनार्थमुपह्वयते। समीपमाह्वयते।

2 भूः प्रजापतिना । इत्येतैस्त्रिरुपगच्छेद्रेतोवस्कन्दयेत् । वीरं हैवंविधमीरयितारं क्षि[क्षे]प्तारममित्राणामाभिमुख्येन वामित्राणां हन्तारं विक्रान्तं वा पुत्रं जनयति । ... प्रतिमन्त्रं स्कन्दयितव्यम् । अत्रासाविति भार्यायाः संबुद्ध्या नामग्रहणम् । .. अत्र स्त्रीरित्यङ्गुलीरिति (I, 20, 1) वचनात्स्त्रीजननार्थमुपगमने लिङ्गवाक्यशेषविरोधान्मन्त्राभाव इत्येके । तन्न । जातिनिर्देशाल्लिङ्गस्याविवक्षितत्वाद्दुहितृपुत्राद्यं [र्थं] पुंजननस्य विद्यमानत्वाच्च । .. अत्र निवीतं मनुष्याणामित्यनुवाददर्शनाच्छास्त्रान्तरदर्शनाच्च निवीतिना भवितव्यम् ।

3 बादरायणः पुनराचार्यो यत्रादौ चतुर्थ्यामुपगमनं यत्रर्तौ चतुर्थ्यादिषु रात्रिषूपगमनं तत्रैव मन्त्रवदिति मन्यते । ..

## Khanda 26

एतस्य खण्डस्य नोक्ता व्याख्या ।

## Khanda 27

1 .. त्रिषु फल्गुन्यषाढाप्रोष्ठपदेषु नक्षत्रेषु । ... परिलिखितमित्यनेन परिलिख्य प्रत्यवटं सकृन्मन्त्रमुक्त्वा त्रिः प्रदक्षिणं यावद्भिरवटैः प्रयोजनं तावतः खात्वा । यावत्प्रमाणैर्वा रात्नैः प्रयोजनं तावत्प्रमाणं वा खात्वा । अभ्यन्तरंपांसून्करोति । यथाखातानां पांसवः शालायामभ्यन्तरे भवन्ति तेभ्यन्तरंपांसवः । अभ्यन्तराः पांसवोभ्यन्तरपांसव इति समानाधिकरणसमासं मन्यन्ते । गर्तानामवटानां

मांसवः [sic] शालायामभ्यन्तरे प्रकीर्णं [sic] करोतीत्यर्थः। मन्त्रवतीनामेव स्थूणानां मन्त्रवन्तोवटाः। सर्वासामपीत्येके। उच्छ्रयणक्रमोवटानां क्रमः।

2 ˙˙ उच्छ्रयति। उच्छ्रित्यावटे स्थापयतीत्यर्थः।

4 ˙˙ संमितौ [B समितौ] सम्यगितौ समयत्यौ [?] वा। प्रत्येकं मन्त्रमुक्त्वा द्वारस्थूणावभिमृशति। स्थूणाशब्दः पुँल्लिङ्गोऽप्यस्ति। ऋतेन स्थूणाविति दर्शनादिति संमितावित्याह (su 7)।

5 एवमेव दक्षिणोत्तरौ स्थूणाराजौ दीर्घस्थूणावुच्छ्रयति स्वेन स्वेन मन्त्रेण।

6 ˙˙ आ त्वेत्यनेन।

7. ˙˙ पृष्ठवंशं मध्यमं वंशम् ˙˙

8 ततः शालायामुपरि सर्वतश्छन्नां शालाम् ˙˙ अभिमृशति। ˙˙˙

9 ˙˙ अनूराधैरनूराधासु नक्षत्रेष्वप्यधिकरण एषा तृतीया। वास्तुगमनं गृहशान्तिकर्म कर्तव्यम्।

Khanda 29

1. ˙˙ सकुटुम्बो गृहानभ्येति गृहसीमं गच्छतीत्यर्थः।

2 ˙˙ अत्र न तदहरागतः कलहं करोतीति। प्रविष्टदिवसे कलहं न कुर्यादित्यर्थः। अथवैतद्वचनं ग्रामान्तरादागतस्यानाहिताग्नेरप्येतत्प्रवेशनविधानमिति ख्यापनार्थम्। तस्मान्नवगृहप्रवेशने ग्रामान्तरादागमने चेदं विधानं स्यात्। केचिन्नवगृहप्रवेशन एवेच्छन्ति। तन्न। गृहानीक्षे-

तास्वनाहिताग्निरिति बह्वृचानामनाहिताग्नेरपि ग्रामान्तरादागतस्यैव प्रवेशनदर्शनात् (Asv Gr S 2,5,17)। अपरे ग्रामान्तरादागमन एवेच्छन्ति। तदपि न। इहापि बह्वृचानामप्युक्तं गृहप्रवेशपदमित्युक्तत्वात् [?]। तस्मात्सूक्तमु[च उ]क्तोभयार्थेनेति। · ·

---

Prasna II, Khanda 1

1 · · अतः शब्दो हेतौ यतोनेन कर्मणा संस्कृतायामुत्पन्ना प्रजा ब्राह्मण्यं लभते न जातिमात्रेण। तत इदमधिक्रियत इति। · ·

2 · प्रथमगर्भे इति वाच्ये प्रथमगर्भाया इति वचनं स्त्रीप्राधान्यख्यापनार्थम्। · अथ किमर्थं क्रमविपर्यासेन प्राक् पुंसवनात्सीमन्तोन्नयनमुच्यते। तत्रैक आहुः। सकृत्कृतस्य सीमन्तोन्नयनस्य विवाहादर्वाक् पुंसवनादीनां प्रतिगर्भमावृत्तावतुल्यत्वादिति। अपरे प्रथमगर्भ[र्भे] पुंसवनस्य भावार्थमिति। तथा केचिच्छन्दोगा गृह्येषु व्याचक्षते। अन्येषु [न्ये तु] पुंसवनस्य कालानित्यत्वख्यापनार्थम्। तथा ह्येकेषां व्यक्ते गर्भे इति वचनम् (Ap 14 9)। अपरेषां किल पष्ठ इति।

3 · · त्रेण्या त्रिःश्वेतया शलल्या ग्लावित्कट[ग्रटं]केन सह शलालुग्रप्समुदुम्बरफलस्तबकमुपसंगृह्य। न्यग्रोधफलस्तबकमित्येके। तस्य च युग्मफलत्वं बह्वृचानामुक्तम्

(Asv 1, 14, 4)। ˙˙ सकृदेव तस्याः सीमन्तं शलालुग्रप्स-
या[?]शलल्या च प्रत्यगपवर्गमुन्नीय विभज्य केशान् ˙˙

Khanda 2

2 ˙˙˙˙ परिमण्डलशाला मण्डलागारम्। ˙

3 आण्डौ स्थ इत्यनेन सकृदुक्तेन यवमभितो दक्षिण-
तश्चोत्तरतश्च सर्षपौ द्वौ धान्यमाषौ वादधाति। धान्यग्रहणं
परिमाणमाषनिवृत्त्यर्थम्।

4 ˙˙ गावं दधिद्रप्समादधाति। तत्समुदितमेनां प्रा-
शयति तूष्णीम्।

5 ˙˙ अभिमृशति ˙˙ उभाभ्यां हस्ताभ्यां मन्त्रलिङ्गात्।
प्राशनानन्तरं मा भूदित्याचान्तायाः इति वचनम्।

6 न्यग्रोधशृङ्गं न्यग्रोधशाखाग्रं तद्वा पिष्ट्वा प्रपीड्य च
रसं गृहीत्वा घृतेन मिश्रयित्वा। कोशकारी कौशेयाख्यस्य
कोशस्य कर्ता कृमिस्तं वा पिष्ट्वा। प्रैयङ्गवेण प्रियङ्गुवि-
कारेण संयावेनौदनादिनावस्रावितेन द्रव्येण मिश्रयित्वा।
यूपशकलं वोत्तरपूर्वस्याभिश्रेरये गृहीतं चूर्णीकृतम्। वच-
नात्संस्पर्शः प्राग्वा समाप्तेर्ग्रहणम्। अग्निं निर्मन्थ्य मथितं
निर्वाप्य तूष्णीं कृतमग्निमेव वा यथा न दहेत्तथा। ˙˙ उदु-
म्बरमूलमूलमित्यर्थः। तदुपधानं यस्याः शिरसः सोदुम्बरोप-
धाना। तस्या दक्षिणे नासिकाछिद्रे प्रणयेत्प्रवेशयेत्तूष्णीम्।

7 यदि गर्भो गर्भिण्याः स्रवेत् ˙ स्वेन पाणिना ˙˙
सकृन्मन्त्रमुक्त्वा चिरुन्मार्ष्टि। ऊर्ध्वापवर्गं संस्पृशते। ˙˙

Khanda 3

1 ··· तूर्यन्तीमवकाम्] केचित्तावि[मि]मामौषधविशेषमाहुः। तां निधायानन्तरमस्या उदरमभिमृशति। कथम्। यथैवेत्यनेनावाङ्धोपवर्गमवमार्ष्टि सुतरामा योनिं निमार्ष्टि। यद्येवमस्या उदरं यथैवेत्यवाङवमार्ष्टीत्येतावता सिध्यति। एवं तर्हि। अथास्या उदरमभिमृशति यथैवेत्यनेन ततस्तूष्णीमवाङवमार्ष्टीति। अथवा तूष्णीमभिमृशति मन्त्रेणावाङवमार्ष्टीति। एवमवसर्पत्विति लिङ्गोपपत्तिः। अत्राथशब्दो नित्यत्वख्यापनार्थः। तेन काम्यमिदं न पुंसवनवन्नित्यम्। अमशुभाशुभयोरपेक्षया कार्यमिति। नित्यत्वख्यापनार्थमित्यपरे।

2 जाते कुमारे।· तेपूत्तराधरेषु। उत्तरमधरं येषामिति बहुव्रीहिः। यथावस्थितं विपर्यस्य यथाधस्ताद्धिरण्यमुपरि शाचाश्मा तथा कृतेषु। उपरिष्टात्तेषां कुमारं हस्ताभ्यां धारयति।··

3 यद्यपरा जरायुः सूतायां[या] न पतेच्च निर्गच्छति। ·· अस्या मूर्धानमवसिञ्चेत्प्रक्षालयेन्मूर्ध्नि सिञ्चेदित्यर्थः।·

4 उपनिर्हरन्ति समीपादस्य कर्मणो निर्गमयन्त्यौपासनमग्निं तमतिहाय[यो]दं[मं] सूतिकाग्निं हरन्ति। सूतिकाग्नेरभिहरणादन्यस्याग्नेरप्रसङ्गः। अथौपासनस्याग्नेर्निर्हरणवचनं पूर्वच पुंसवनसीमन्तोन्नयनयोरौपासन एव क्रियेति ज्ञापनार्थम्। ननु तस्मिन्गृह्याणि क्रियन्त इति वचनादेव तत्सिद्धम् (s Baudh. II, 10)। न सिध्यति। जायापती-

कर्मार्थं [सूc] तद्वचनमिति । यत्तसमावर्तनादिष्वेव संस्कारेषु न प्राप्नोति । हि [तर्हि] तथापि प्राप्तिज्ञापनार्थमिदम् । उक्तं च बौधायनेन तस्मिन्प्रजासंस्कार इति (Baudh II, 10) । केचिदुपनिर्हरणवचनं सूतिकादिवसेष्वौपासने कर्तव्यानां पार्वणसायंप्रातर्होमाणां निवृत्त्यर्थं मन्यन्ते। तद्धर्मशास्त्रादेव सिध्यति मरण इव । उभयत्र दशाहानि कुलस्यान्नं न भुज्यते दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तेत इति । वैतानिकनिवृत्त्यर्थं नियम इति चेत् । तदपि न । विप्रतिषेधे श्रुतिलक्षणं बलीय इत्येव सिद्धत्वात् । अपर आहुः प्रयोजनेष्वौपासने कर्तव्यानां सूतिकाग्नौ संक्रमणार्थमिति । ततः पार्वणवैश्वदेवादिष्वतिप्रसङ्ग इति चेत्। नेत्युत्तरत्र वक्ष्यामः।

5 स एष सूतिकाग्निरुत्तपनीय एव कपालसंतापाग्निरेव स्यात् । अप्सरीयमुत्तपनीयमित्येके । तथा त्वर्थवत्ता गन्धस्य न स्यात्। एवकारकरणं केषांचिन्निर्मन्थ्यस्यौपासनस्य वा वचनान्नियमार्थम् ।

6 अस्मिन्सूतिकाग्नौ । ·· प्रथमार्थे चल् । इतराभ्योपि दृश्यन्त इति (Pan V, 3, 14) । समित्परिषेकनिवृत्त्यर्थमिदम् । परिस्तरणं कुर्वन्ति परिषेकवत्तूष्णीम् । सर्वस्याभावो न्याय्योन्यथोद्धूपनादित्यनर्थकम्। विधानसामर्थ्यान्निवृत्ते नानर्थकम् । रक्षामाचार्योयमग्निरिति कृत्वा लौकिकेग्नौ तस्य प्रसङ्गात्। ये त्वौपासने कार्याणामिहोपसंक्रमणार्थमुपनिर्हरणवचनं मन्यन्ते त आहुः पार्वणवैश्वदेवसायंप्रातर्होमाणामिहोपसंक्रान्तानां प्रतिषेधवचनमिति । अन्यथोद्धूपनादिति वचनं तुल्यजातीयस्य(?) पक्षद्रव्यस्य होमस्य स्थानेस्य

प्रवृत्त्यर्थम्। तेनान्वहं सायंप्रातरुद्धूपनं सिद्धं भवति। तत्राग्निपरिस्तरणपरिषेकौ मन्त्रवन्तौ च स्याताम्।

7 अथैनं कुमारम् ·· क्रमणार्थं रक्षसामुद्धूपयति। ·· प्रतिमन्त्रमङ्गारेषु तान्सर्षपमिश्रान्कणानावपति। ····· उद्धूपनं पुत्रसंस्कार एव। तेन सायं प्रातरपि क्रियमाणं रक्षार्थमेव कुमारस्य। अङ्गारेष्विति वचनं ज्वालाकाष्ठवत्तानिवृत्त्यर्थम्। आवपतीति वचनं हस्तेन प्रक्षेपार्थमुद्धूपनार्थमप्येतत्। स्वाहाकारवत्त्वाद्धोमकर्मैव। तेन परिस्तरणपरिषेकभावः सायंप्रातःपक्ष उक्तः। परिस्तरणादिप्रतिषेधपक्षे सकृद्धिहैवोद्धूपनम्। आपस्तम्बस्तु प्रत्यहं सकृदाह (Ap 15, 7)। केचित्परिस्तीर्य तूष्णीं परिषिच्य प्रातः कुर्वन्तोऽपि दृश्यन्ते।

8 ·· तत इति वचनमुद्धूपनेन संबन्धार्थम्। तस्मादन्वहं सायंप्रातः क्रियायामप्येतदन्तं कार्यम्।

9 स्था(स्त्रा)पनोपस्था(ना)धानकुम्भनिधानेषु चाथशब्दः कालनियमार्थः कालान्तरेषु शास्त्रान्तरे दर्शनात्। ·· धार्यमाणं घृतं प्राशयति। धार्यमाणेन घृतं प्राशयीत[यति] ·· प्रतिमन्त्रम्।

## Khanda 4

2 ·· आधायेति वचनं पुत्रस्यैवाभिमन्त्रणम्। अथास्याः संबोध्यमानायाः स्त्रिया मा भूदिति। अथवाधिकारात्पुत्रस्यैव मा भूदिति। लिङ्गात्स्त्रिया एवाभिमन्त्रणमित्येतदर्थम्। अथवोभयोरपि[भि]मन्त्रणार्थमेतदुभयोराधाने संबन्धान्मन्त्रसंकीर्तनाच्च।

3. तूष्णीं प्रक्षाल्य · · आधापयति। आदरेण पाययति।

5 · · उभौ स्तनावावर्त्य मन्त्रेणाभिमृश्य · · · । पूर्वः कुम्भः प्रसवादनन्तरमुपनीतः कुम्भान्तरमिदम् । समाप्तं जातकर्म। तत्पुंस एव स्यान्न स्त्रियाः। कुतः। जाते कुमारेऽस्मनीत्येतेषु पुँल्लिङ्गस्य विवक्षितत्वान्मन्त्राणां च पुंस एवाभिधानात्।

6. द्वादश्याम्। द्वादशे दिवसे। माता च पुत्रश्च मातापुत्रौ तौ स्नात इत्येके। तन्न। जातिनिर्देशात्पुँल्लिङ्गस्याविवक्षितत्वाद्दुहितृपुत्रार्थं पुंसवनस्य विद्यमानत्वाद्वा। · · · · · ·

8 · · उत्सृजन्ति सूतिकाग्निं प्रयोजनाभावात्तत्संबन्धानि च पात्राणि। अन्येषां च पात्राणां यथोक्तं शौचं कार्यम्। · · अतः प्रभृति नित्यानि कर्माणि प्रवर्तन्ते।

9 तमौपासनम्। · · धाता दादातु नो रयिमित्येवमादि या सुपाणिरित्येवमन्ता द्वादशाधिकाः प्रधानाहुतीर्जुहोति। कुहूमित्येतया सह त्रयोदश जुहोतीत्येकेषां मतम्। उपनिर्हरन्ति सूतिकाग्निमग्निमुपसमाधायेत्येव सिद्धेतिहरन्त्यौपासनमिति वचनमेवौपासने[नं] सूतिकाग्नावेव समारोप्य मथिते केषांचिद्धोम इह विहितस्तन्निवृत्त्यर्थम्। एवमप्यौपासनमुपसमाधायेत्येव सिद्धेतिहरन्त्यौपासनमिति वचनमित ऊर्ध्वं प्रागुपनयनाद्ये प्रजासंस्कारास्तेऽप्यौपासन एव भवेयुरित्येतदर्थम्। केषांचित्सूतिकाग्निमेव समारोप्य निधान[नें] मथित्वा। तस्मिन्क्रिया लुप्ता।

10 वारुणीहोमादिपरिषेकविसर्गान्ते कृते न होमादिब्राह्मणतर्पणान्तं कृत्वा। · · नाम संज्ञाभिधानमित्यर्था-

न्तरम् । कीदृशम् । द्वे अक्षरे परिमाणं यस्य तद् द्व्यक्षरम्। चत्वार्यक्षराणि परिमाणं यस्य तच्चतुरक्षरम् । अक्षरशब्दोत्र स्वरेषु वर्तते । यथा चतुर्विंशत्यक्षरा गायत्री । यत्र द्व्यक्षरं वा चतुरक्षरं वा । घोषवत्सवर्गप्रथमद्वितीयेभ्योन्यद्व्यञ्जनमादिर्यस्य तद्घोषवदादि । अन्तर्मध्ये । अन्तस्था यरलवानामेको यस्य तदन्तरन्तस्थम् । अभिनिष्ठान्तः [?] । अभिनिष्ठानान्तः [?] प्रमादपाठ इत्येके । विसर्जनीय इत्यर्थः । दीर्घश्चाभिनिष्ठानश्च दीर्घाभिनिष्ठानौ तावन्ते यस्य तस्य दीर्घाभिनिष्ठानान्तत्वम् । यौगपद्येनाम्नातत्वाद्दीर्घान्तं विसर्जनीयान्तं वेत्यर्थः । केचिद्दीर्घात्परं विसर्जनीयं मन्यन्ते । यस्मिन्स्वित्युपसर्गः स्यात्तद्वा दध्यादनादृत्य घोषवदादिकं लक्षणम्। कुतः । तत्प्रतिष्ठितं लोक इति । विज्ञायते हि । प्रतिष्ठा नाम्नो नामवतो दीर्घायुष्ट्वम् । उपसर्गग्रहणं (प्रति) तच्छब्दोपसंग्रहणार्थं सुपुवाणादिषु मा भूदिति । क्रियायोगस्य नाम्नि विवक्षा । तत्रोदाहरणानि । धावा । धन्वा । यावा । दाधा [?] । मयो[यः।] द्रोणः । वलः । देवः । निर्णीः । दूः । निलूः । नीवीः । वीर्यदायी । भूरिदामा । मालभारी । वहुदावा । जयसेनः । विश्वामित्रः । बलदेवः । देवदत्तः । महायशाः । भूरिदावा । विशालदा[ः] । वहुश्रवाः । सुश्रीः । सुदाः । सुविशाखः । भुवसुश्रीः [?] । इत्येवमादीनि ।

11 ‥ अभिव्याहरेयातामुच्चारयेयाताम् । कर्त्रभिप्रायत्वादात्मनेपदार्थतापि (Pan I, 3, 72) । पुत्रनामकरणे हि जातेष्टिप्रत्यय[यो]न श्रुतावात्मनेपदवदिति । कुतः । विज्ञायते हि मम नामेत्येतस्मिन्मन्त्रवर्णे पिता माता च दधतुर्यदग्र

इति । तस्मादादितस्ताभ्यामुच्चारयितव्यम् । यथा देवदत्तोयं यज्ञदत्तोयमिति । ततः पुण्याहादिवाचने ब्राह्मणैरभिव्याहारयितव्यम् ।

12. ˙˙ विज्ञायते हि । तस्माद् द्विनामा ब्राह्मणोर्धुक इति धिष्ण्यव्याघारणवाक्यशेषेषु । अर्धुको वर्धनशील इत्यर्थः । अस्यानुवादत्वाद्ब्राह्मणग्रहणं त्रैवर्णिकप्रदर्शनार्थम् । नामाधिकारे पुनर्नामग्रहणं नामेदमनित्यमुक्तलक्षणमिति । तेन (यदक्षरसक्षरत्वघोषवदाद्यनियम)संख्याद्यनियमेन च चतुर्णां वर्णानां क्रमेण शर्मवर्मभूतिदासान्ततां [सान्तता] पूर्वपुरुषनामक्रियार्थमूक[यर्थणूका]त्वं देवतारूपत्वं[1]) कृदन्ततानियमो वृद्धितद्धितप्रतिषेध[ः] स्त्रीणामयुगाक्षरत्वमिति सिद्धानि भवन्ति । (एवं) कुर्यादिति किमर्थम् । दध्यादित्यधिकाराद्भवत इति वाध्याहारात्सिद्धेनानर्थकम् । तस्येदं प्रयोजनम् । द्वयोरेव[वं]लक्षणयोर्नाम्नोः क्रिया स्यादिति । यद्येवं पूर्वत्रैव नामनी दध्यादिति वाच्यम् । नैवं शक्यम् । एवमुच्यमाने द्वयोर्नाम्नोः पुण्याहादिवाचनकाल एव क्रिया वाचनं च प्रसज्येत । इह पुनः क्रियमाणेन्यस्मिन्काले गुह्यनाम्नः क्रिया वाचनाभावश्च सिद्धो भवति ।

13. ˙˙ नक्षत्रनाम किम् । तज्जन्मनक्षत्रप्रकृतिकं तत्रजाततद्धितान्तम् । यथा रौहिणः । श्राविष्ठः । आर्द्रकः । शातभिषक् । इति ˙˙ । तथा कृत्रिमयोर्नाम्नोरन्यतरन्नाम गुह्य-

[1]) See note to Āp. Gṛ. su. 15, 9 comm.

मन्यैरविदितं स्यात् । मातापितरावेव तज्जानीतः । उपनयनात्प्रभृति कुमारोपि जानीतेत्येके ।

14 अन्यतरेण गुह्यादन्येन नाम्नैनं कुमारं लौकिकेषु वैदिकेषु च कर्मस्वामन्त्रयीरन् । संबोधनादिना व्यवहरेयुः । येन व्यवहरेयुस्तस्य नक्षत्रनाम द्वितीयं स्यात् । अथ तद्वाक्यत्रयमेकं वा वाक्यं व्यत्ययेन च संबन्धः । तयोः कर्तृकर्मणोर्नाम्नोरन्यतरन्नाम गुह्यं स्यादन्यतरेण गुह्यादन्येन नाम्नैनं कुमारं लौकिकेनैनमामन्त्रयीरन् । तस्य वामन्त्रणीयस्य नक्षत्रनाम द्वितीयं स्यादिति ।

15 सोमेनेष्टवान्स सोमयाजी स एतयोस्तृतीयं नाम सोमयाजीत्येतत्कुर्वीतेति विज्ञायते । तृतीयं सोमयाजिन इत्यत्र केषांचिद्व्याख्या । द्विनाम्नी[?]कुर्यादित्युक्तम् । तयोः पुत्रस्य नाम दध्यादित्येकं लक्षणं तदुक्तम् । अथ किं द्वितीयं नामेति । उच्यते । नक्षत्रनाम द्वितीयं स्यात्तयोश्चान्यतरन्नाम कृत्रिमं नक्षत्रनाम वा गुह्यं स्यादिति । अन्यतरेण गुह्यादन्येनैनं लौकिकेषु व्यवहारेष्वामन्त्रयीरन् । सोमयाजी तृतीयमिति तुल्यं तेषां कुर्यादित्यनुपपन्नमकृत्रिमत्वात् । नक्षत्रनाम्नो गुह्यत्वं च कस्यचिन्न स्यात्प्रयोगकाले व्यक्तभावाद्विरोधश्च शास्त्रान्तरेणागमेन स्यात् । बह्वृचानां च व्यक्तं नाम चास्मै दद्युर्घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरम् ... चतुरक्षरं वा ... इत्येवमादिना लक्षणेनैकं नाम विधायाभिवादनीयं च समीक्षेत[तेति] द्वितीयं नाम विहितं (Âsv I, 15, 4—8) । तथा कौषीतकानां नामास्य दधातीति जातकर्मानन्तरमेकस्य क्रियामुक्त्वा दशम्यां व्यावहारिकमिति द्वितीयस्य क्रियोक्ता (Sânkh I, 24, 4, 6) । तस्मात्पूर्वोक्त

एवार्थः। तत्र जातकर्मानन्तरमेव गुह्यं नाम कर्तव्यमिति केषांचित्तत्र दर्शनादिहैवार्वाक् पुण्याहादिवाचनादत्र वचनसामर्थ्यात्। तत्र प्रयोगः। अनन्यसकाशे मातापितरौ देवोऽयं देवदत्तोयमिति यथानाम गुह्यमभिव्याहृत्य प्राक् स्वस्तिवाचनात्कृत्वा पूर्ववद्व्यावहारिकं मातापितरौ प्रथममभिव्याहृत्य ब्राह्मणैरप्यभिव्याहारयतो नक्षत्रनाम्ना सह। कथम्। देवदत्ताय कार्त्तिकाय स्वस्ति भवन्तो ब्रुवन्त्वित्ययं ब्रूते ते च यथार्थं ब्रूयुः। तच्चद्विवाचनम्। नक्षत्रनामापि मातापितरौ व्यावहारिकादनन्तरं कार्त्तिको रौहिण इति प्रथमया विभक्त्या व्याहारयतः। पुण्याहादिवाचन एव कृत्विमेपीत्येके [?]। तदपि न। विरुध्यत एव। स्त्रियाश्चार्थप्राप्तत्वान्नामकरणं कर्तव्यम्। तदर्थत्वात्पुण्याहादिवाचनं च नान्यदस्ति। जातकर्मादि प्रागुपनयनात्सर्वं कर्म तूष्णीं कर्तव्यम्। वद्भ्चानामप्युक्तमावृ॰ (Āśv. I 15, 10)। जातकर्मणस्तूष्णीं क्रियापि नास्तीत्येके। तत्र स्त्रिया एकाक्षरादीन्यासन्नाक्षराणि नामानि। यथा। श्रीः। सुभद्रा। माधवदत्ता। स्कन्दविशाखदत्ता। इति। नक्षत्रनामान्यपि स्त्रीपुंसयोरबुद्धयोर्बोधायानुक्रमिष्यामः। कार्त्तिकः कार्त्तिकी। रौहिणो रौहिणी। मार्गशीर्षो मार्गशीर्षी। आर्द्रक आर्द्रिका। पुनर्वसुः पुनर्वसूः। तिष्यस्तिष्या। आश्रेष आश्रेषी। माघो माघी। फाल्गुनः फाल्गुनी। हस्तो हस्ता। चैत्रश्चैत्री। स्वातिः स्वाती। वैशाखो वैशाखी। आनूराध आनूराधी। ज्यैष्ठो ज्यैष्ठा। मूलको मूलका। आषाढ आषाढी। आभिजित आभिजिता। श्रावणः श्रावणी। श्रविष्ठः श्रविष्ठी(या)। शातभिषः शातभि-

षका [षी]। शतभिषजः शतभिषजी। प्रौष्ठपदः प्रौष्ठपदा। रेवतो रेवती। आश्वयुज आश्वयुजी। अपभरणोपभरणी। इति यथार्थविभक्तयः। · ·

16 प्रवासात्पुत्रसकाशमागत्य प्रवासादात्मसकाशमागतं च पुत्रम् · · अभिमृशति। वाशब्दः समुच्चये।

17. · · असाविति संबुध्या नामग्रहणम्। अभिजिघ्रायेति [sic] वाच्ये ऽभिजिघ्रेति वचनम्। · · · · · · प्रमादपाठो वा।

19 आयुषे। आयुर्दैति सानुषङ्गं यथा पुरस्ताद्दक्षिणोत्तरयोः कर्णयोर्जपति तत्र ब्रह्मचारिशब्दो भाविनि वर्तते। उपनयनेपि भूतेन संभवतीति हि। प्रागुपनयनादेतत्कुर्यादित्येके। यावज्जीवमित्यपरे। तूष्णीं स्याद्दुहितुरपीह केचित्। · · ·

## Khanda 5.

1 · · · · यस्मिन्कर्मण्यन्नं प्राश्यति[ते] कुमारस्तदन्नप्राशनम्। अथशब्द आनन्तर्ये चतुर्थे मास्युपनिष्क्रमणं निर्वर्त्य ततोनन्तरमिति। प्रागसादुपनिष्क्रमणस्य भावार्थम्।

2 · · · अथेत्यानन्तर्यवचनं पूर्वस्यैतदङ्गत्वायेदं प्रधानकर्मेति। तेनेदमर्थप्राप्तत्वास्त्रिया अप्यस्ति न मन्त्रपूर्वम्। एनमिति वचनं स्त्रिया मन्त्रनिवृत्त्यर्थम्।

3. · · अन्नं मांसादि व्यञ्जनसहितमोदनम्। · · अन्नाद्यशब्दस्त्रिवृदन्नप्राशनयोः परस्परसंबन्धार्थः। तेन स्त्रिया अपि त्रिवृत्प्राशनम्। अन्नाद्येनमिति स्त्रिया मन्त्रनिवृत्त्यर्थम्।

## Khanda 6

2 ˙˙ उदगयनमथवाचाराद्ग्राह्यम् । ˙˙ संस्कार्यस्य कुमारस्य हेतुकर्तृकत्वात्कर्तृत्वं परिवेषणादेरपि कुमारस्येति समानकर्तृत्वेन निर्दिष्टम् । होमकाले प्रवे [ल उपविश्या-न्वारभ्यासीनः पुण्याहादिवाचनार्थमुत्थितः पुनरुपविशति ।

3 उत्तरतोऽयेमाता कुमारस्य ब्रह्मचारी वा कश्चित्तद-भावे ˙˙ धारयत्यु[ति धारयन्नु]पविशति । अथवोत्तरेणेति वक्तव्य उत्तरत इति वचनमग्निसंबन्धार्थनिवृत्त्यर्थम् । तेनोत्त-रतः कुमारस्योपविशति । सौकर्याच्चैवं केशप्रतिग्रहणं स्यात् ।

4 शकृत्पिण्डेन ˙˙ केशान्वप्तान्प्रतिगृह्णाति [sic] । उत्त-रत इत्येतदादि प्रतिगृह्णातीत्येतदन्तं वा सूत्रं धारयंस्तेनास्य केशान्प्रति [गृह्णातीति] पठितव्यम् ।

5 ˙˙ अथशब्दो विधेयाधिकारार्थः । इदं प्रवक्ष्यमाणं प्रधानं कर्म पूर्वं तदङ्गं कुमार्याश्च तूष्णीं कर्तव्यमिति । शी-तासूष्णा आनीयेत्येव सिद्ध उष्णशीता आपः संसृजतीति वचनमन्यचापि वचने शीतोष्णाभिरेवोन्दनमिति । तेन शी-तोष्णाः समावर्तने दीक्षायां चोन्दनीयाः शीतोष्णा एव स्युः ।

6 ˙˙ भूतोपदेशात्पुरुषार्थत्वाच्च समयाल्लौकिकाग्नौ परि-तपनम् ।

9 ˙˙ प्रच्छिन्नान्केशान्मात्रे ब्रह्मचारिणे वा प्रयच्छति । प्रत्ताग्गोमये निदधाति ।

10 एवमितरान्पर्यन्तान्यथादारभ्य प्रदक्षिणमुन्दनादि-ना विधानेन प्रच्छिनत्ति । तत्र येनावपत् । येन पूषा । यथा

ज्योगिति क्रमेण देवश्रूरित्यस्य प्रत्याम्नायः। प्रच्छिद्य प्रच्छिद्य शकृत्पिण्डे निधानार्थं प्रयच्छति । तत्रासाविति संबुध्या नामग्रहणम् । पश्चादुत्तरतः पुरस्तादिति वचनादेव प्रादक्षिण्ये सिद्धे प्रदक्षिणमिति वचनं वपनमपि दक्षिणादारभ्य प्रादक्षिण्येन वेदितव्यमित्यर्थम् ।

11 उप्त्वा वपनादनन्तरं मुण्डयित्वा यथोचितं यथा कुलस्योचितं यथाकुलधर्ममित्येकां द्वे तिस्रः पञ्च वा शिखा यथाप्रदेशं कारयन्ति [sic] । यथा । एकार्षेयस्यैका । द्यार्षेयस्य द्वे । त्र्यार्षेयस्य तिस्रः । पञ्चार्षेयस्य पञ्चेति । तत्रैका चेन्मध्ये । द्वे चेन्मध्ये पुरस्ताच्च । तिस्रश्चेत्पश्चान्मध्ये पुरस्ताच्च दक्षिणतो मध्य उत्तरतो वा । पञ्च चेत्प्रतिदिशं मध्ये च । उप्त्वेति वचनं छेदनमात्रं मा भूदिति । स्वातन्त्र्यविवक्षया कुमारस्य वपनैककर्तृत्वं शिखाक्रियायां च हेतुत्वं चेति कारयतीत्युच्यते । अथवा कारं करोतीति कारयतीति शुद्धः कर्ता नापित एवोच्यते । ··· ··

12 संयम्य गृहीत्वा ·· निखनति योस्य कुमारस्य रातिर्भवति सः ।

13 यथाश्रद्धं यथाशक्ति ब्राह्मणाय ब्राह्मणेभ्यः । जातिनिर्देशो वायम् । ब्राह्मणेभ्यो वा यैः पुण्याहादि वाचितं तेभ्योविशेषेण वाचकेभ्यश्च दक्षिणां ददाति ।

14 ·· समाप्तं चूडाकर्म । अस्यादौ नान्दीमुखं श्राद्धमपाचक्षते ।

16 ·· मध्यमामपि शिखां नावशिनष्टीत्यर्थः ।

17 शिखामेकां मध्यमाम् ··

18 अग्निकार्यमेव गोदानकर्म यस्य सोऽग्निगोदान-
कर्मा । अग्निगोदानो वा कुमारो भवति । उपसमाधाना-
दिपुण्याहवाचनान्तमग्निकार्यमिव वा भवतीत्यर्थः ।

19 गुरव आचार्याय गामस्य कर्मणोन्ते ददाति । अ-
ग्निगोदान एवं गोदानमित्येके । तन्न । उभयत्रैव स्थानेन
हीदं कर्म गोदानमिति समाख्यायते । अस्माकमिदं संस्का-
रकर्म प्रागूर्ध्वं चोपनयनात्षोडशे वर्षे कार्यम् । बह्वृचानां तु
सांवत्सरिकमिदं व्रतं चौलवदस्मिन्नेव काल उपाकृत्य चरि-
तव्यम् (Asv I, 18, 9) । ˙˙

## Khanda 7

1 ˙˙ श्वयहोपस्मारः । उन्मत्तः सारमेय इत्येके । ˙˙

2 समुपसृजत [sic] आविष्टे । ˙˙ आचान्तः कर्ता । कर्मा-
ङ्गमिदमाचमनं प्रयतस्यापि । यज्ञोपवीतं चाभ्यधिकमजिनं
वासो वा । अनाप्रीतेन नवेन शरावेणोदकमभ्युक्षणार्थमा-
हृत्य । सभायां कितवसभायाम् । मध्य उपरि । यत्र दीव्यन्ति
सोऽधिदेवनो देशः । अस्यावृदित्यर्थः [?] । अक्षान्विभीतका-
न्ययार्थान्युप्य । व्यूह्य प्रतिदिशं विभज्य । समूह्य समूढाने-
कधाकृत्य । पुनस्तान्नयित्वा यथा तेषु ग्ना[य]यितुं शक्यते
तथा विस्तार्य । सभाया उपरिष्टादाच्छादनतृणानि तानि
व्यूह्य मार्गं कृत्वा । तेन मार्गेण कुमारं ग्रहगृहीतमवहृत्य
सभां प्रवेश्य । तेष्वक्षेपूत्तानं निपात्य शाययित्वा । ˙˙ कर्ता-
भ्युक्षति कांस्यं च ताडयति । कुमारस्य दक्षिणतो घ्नन्ति
तस्मिन्काले बहुवचनमनियतकर्तृकार्थम् । कुमारस्याभ्युक्षण

एते मन्त्रा न कांस्यघातार्थाः संस्कारार्थत्वात्कुमारस्य संनिपत्योपकारकत्वाच्च। प्रधानमभ्युक्षणम्। तदर्थः कांस्यघातो गुणभूत आरादुपकारकत्वाद् घातः। प्रधानेन संबन्धो मन्त्राणां न्याय्यो न गुणेनेति। केचिदानन्तर्यात्कांस्यघातार्थतामेषां मन्यन्ते तूष्णीं चाभ्युक्षणम्।··

3 अथ कर्ता ब्रूयाद्वरं वृणीष्वेति। अथेत्यभ्युक्षणेनास्य संबन्धः। तेनोक्तकर्तेति।

4 कुमारसंबन्धी पिता भ्रातान्यो वा वदतीति। स चातो[तः] सर्वेचाथशब्दात्। केचित्त्वाहुः। एतस्मात्मार्यश्चित्तकरणात्स एवाविष्टो ग्रहो ब्रवीति वरं वृणीष्वेति। तं प्रतिब्रूयात्कर्ता कुमारमेवाहं वृण इति। तयोर्यु[तयोयु]क्तेन कृत एवमेवावश्यं भवतीति तेषां दर्शनम्। तदुत्तरेण वाक्येन विरुध्यते।

5 एवं समुपसृते च ग्रहे·· कुर्याद्यदृचायचा[द्यदि च यावच्चा] गतोनितो न स्यात्तावत्कुर्यात्। अथवा यद्भयाद्यपि [वा यद्यपि] सकृत्करणेनागदः स्यात्तथाप्येकस्मिन्नहनि प्रातरादिषु कालेषु कुर्यादेवेति। अस्मिन्व्याख्याने यदुप[य-दप] चागतः स्यादिति पाठः। अपरे व्याचक्षते। एवं समुपसृतेपि यदपागतो यदा यस्मिन्नपि काले ग्रह आविष्टमन्दा च कुर्यात्। एकस्मिन्नेवाहनि मन्यहं वा यावद्ग्रहोपगमस्तावदिति। तेषां यदृचा[पा]गतः स्यादिति पाठः। अपरे व्याचक्षते। तत्र समुपसृत इत्यतिरिक्तमिवोपलक्ष्यते। तत्परिहारार्थमन्ये वर्णयन्ति। प्रथमं कृत्स्नकस्मिन्नहनि समुपसृते च कुर्यात्प्रातरादिषु त्रिष्वपि। समुपसृतेपि द्वितीयादिष्वह·

स्वादिष्टमेव कुर्यान्न प्रातरादिष्वहःसु। अच तपोयुक्तः कुर्यादित्यापस्तम्बेनोक्तम् (Ap 18, 1)

## Khaṇḍa 8

1 शूल(गवा) इव गवां भवतीति शूलगवो रुद्रः। स यस्य देवता तच्छौलगवं कर्म। तस्माच्छौलगवेन शान्तो रुद्रः पशून्न हन्यात्। ·· गवामुपतापे शान्त्यर्थमिदं कर्मोत्तरत्र शिवो हैव भवतीति दर्शनात् (II, 9, 7)। ·

2 ·· स्थपयित्वा। पार्वणवत्स्वयमेवावहृत्य ·· द्वे कुटी कृत्वा दक्षिणोत्तरे प्राग्द्वारे वा कृत्वा दक्षिणस्यां कुट्यां शूलगवं देवमावाहयेत्। ·· संपरिस्तीर्येत्येतदर्थमथवा यथा संगता दर्भा भवेयुस्तथा परिस्तीर्येति। प्रागुदगग्रपक्षेणेत्यर्थः।

3 उत्तरस्यां कुट्यां मीढुषीं तस्य शूलगवस्य पत्नीमावाहयति।

4 तयोः कुट्योर्मध्येवकाश एव जयन्तं तस्य पुत्रमावाहयति। मीढुषीमावाहयामि। जयन्तमावाहयामि [मीति]। लौकिक्यायां वे[क्या वाचे]तरयोरावाहनमित्येके। अन्ये तु। आ त्वा वहन्त्वित्यनेनैव सर्वेत्येतस्य मीढुषीं [पि] जयन्तोत्येतत्पदद्वयं कृत्वेति। कंचित्प्रदेशमायतनं कल्पयित्वा तत्रागमनं संकल्प्य मन्त्र(?)वचनमावाहनम्। प्रतिकृतिमप्येके कुर्वन्ति।

5 यथोक्तमावाहनक्रमेणायतनेषु ताभ्यो देवताभ्य उदकाञ्जलींस्तूष्णीं प्रदाय। उपस्तीर्णाश्चाभिघारितांश्चोपस्तीर्णाभिघारितांस्त्रीनोदनान्स्थालीपाकेन कल्पयित्वा त्रिषु

पात्रेषूपस्तीर्य तेषु स्थालीपाकं त्रिधा व्युद्धृत्याभिघार्येत्यर्थः। ⋅⋅ उपस्पर्शयति। ताभ्यो देवताभ्यस्त्रीनोदनांस्ताभ्यः संकल्पायतनेषूपहरति। ⋅⋅

6 ⋅⋅ कुटिभ्य ओदनादेकैकस्याहृत्य जुहोति। आघारवत्त्वादत्रास्त्यवदानधर्मः। ⋅⋅ अष्टाहुतीः शूलगवौदनस्य जुहोति। उत्तरयोरितरयोः। ⋅⋅⋅

7 अथ पत्न्योदनस्य मीढुष्या ओदनस्यावदाय जुहोति। ⋅⋅ अथशब्दो व्याहरणस्यायमेव काल इत्येतदर्थः। अन्ये व्याहरणं पूर्वमेव कृतमिति ज्ञापनार्थमिति।

8 मध्यम ओदनो मध्यमौदनो जयन्तौदन इत्यर्थः। तस्यावदाय जुहोति जयन्ताय स्वाहा। जयन्ताय स्वाहेति। द्विर्वचनान्मन्त्रस्य पूर्वाभ्यामोदनाभ्यां साहचर्याच्चाष्टावेता आहुतीर्जुहोतीत्युपदिशन्ति। द्वे एवेत्येके मन्त्रद्वित्वात्स्कन्दविशाखापेक्षत्वाच्च। अथशब्द उक्तप्रयोजनोथवा पूर्ववेह चाथशब्दस्त्रयाणामोदनानां तुल्यत्वख्यापनार्थम्। तेनेहाप्यष्टावाहुतयः स्युः।

9 सर्वेभ्यस्त्री[स्त्रि]भ्यः। ⋅ अत्राथशब्दः प्रधानाहुत्यानन्तर्यार्थः। तेन वारुण्यादीनामभावः। केचित्तु अपीच्छन्ति राष्ट्रभृत्पर्यन्ताः प्रागस्याज्येन। तत्प्रतिषेधादथशब्दोनर्थकः स्यात्।

10 अभित एतमग्निमस्यापि दक्षिणत उत्तरतश्च। समन्तत इत्येके। अभितः परित इत्युपसंख्यानाद्द्वितीया (Pân II, 1, 2 Siddh. K.) ⋅⋅ हूयमानस्य हविषो गन्धमाघ्रातुं गवोपस्थासत्ता इध्माधानादारभ्य स्थाप्याः।

11. स्विष्टकृदन्ते परिषेकविसर्गादि कृत्वा ˙˙ सर्वत इदं कर्म देवैः सह गवामिकुटिकं प्रदक्षिणं परिक्रम्य नमस्त इत्येतैरेकादशभिरनुवाकैः शूलगवमुपतिष्ठते । ˙˙

## Khanda 9

1. ˙˙ बौद्धानि पलाशपर्णानि । तेषां विहारो विहरणं नानादेशेषु स्थापनं बौद्धविहारः कर्मनाम वा । अथशब्दो-वधारणायामनन्तरमुपस्थानात् । पर्णपुटार्थत्वाद्वेतौ बौद्ध-विहार एव वक्ष्यते । आनन्तर्यवचनमोदनपिण्डयामन्नावुप-स्थानवन्नित्यत्वार्थम् । प्रमाणमप्येषां कर्म न पिण्डधारणमा-त्रमित्यनुवचनम् । पर्णान्तरपुटकरणप्रतिषेधार्थमेवकारकार-णम् । विहरणमेव देवताभ्यः प्रधानाचा[नं ना]यौ होम इत्ये-तदर्थम् । अन्ये बौद्धानि विकीर्यन्ते यत्र स(1) बौद्धविहार इति । आसञ्जनान्तं कर्म बौद्धविहारः सोनन्तरमुपस्थाना-द्धविःशेषप्रतिपादनार्थत्वादुच्यते । स एव नात्र स्वाहाकार-त्वेपि होम इत्येतदर्थमेवकारकरणम् । आनन्तर्यवचनं पूर्वा-ङ्गत्वाय । तेनेदं प्रतिपत्तिकर्म न कर्मान्तरं फलहेतुकमित्ये-तदर्थमिति ।

2. ˙˙ चत्वारि पलाशानि ददाति । देशान्तरे पृथग्वच-नसामर्थ्याद्दृशैतानि पर्णानि दत्तानि ।

3. ˙˙ ददाति ˙˙ प्रतिपर्णमावृत्य [sic] देशान्तरे ।

4. ˙˙ ददाति ˙˙ आवर्त्य मन्त्रं देशान्तरे । ˙˙

5. अथ तैरेव सादितैः पर्णैः कण्टकादिभिः संतृद्य पर्ण-पुटं कृत्वा तस्मिन्नुपस्तीर्यौदनशेषादेकं पिण्डं कृत्वावदाया-

भिधायं तमादाय परं[रो] गव्यूतो[तिं गो]रध्वानं राचौवो[वा] गोः संचारभूमिं गत्वा कस्मिंश्चिद्वृक्ष आसजति । निषङ्गिन्नित्येके । अथेति वचनमेतैरेव पुटक्रियार्थम् ।

6 अथैनमासक्तमुपतिष्ठते । ˙˙ अथैके [अनैके] यावदुक्तेनैतेनोपतिष्ठते[न्ते] । कल्पजं मन्त्रान्तरं मन्यमाना अनुवाकशेषेण तृतीयस्य शतरुद्रीयानुवाकस्य तृतीयेन पर्यायेण सह चतुर्थादेर्नमस्कारस्य प्रतीकत्वेन ग्रहणं मन्यमानाः । तन्न । अन्येनुवाकशेषेणावचनान्मन्त्रान्तरं मन्यमानाः । प्रमाणभावान्मन्त्रैकदेशोपादानस्य न्याय्यत्वाच्चान्यो नमस्कारोसन्नेव प्रक्षिप्त इति यावदुक्तेनैवैकेन नमस्कारान्तेनोपतिष्ठते[न्ते] । अथशब्द आसक्तस्यैवोपस्थानार्थम् ।

7 अथ प्रतिनिवृत्य ततो देशात् । चन्दनस्येदं चान्दनमनुलेपनम् । सुरोदकं वर्ष्यमुदकम् । आतपवर्ष्यमित्येके ।' अक्षतानि तण्डुलाः । अखण्डितान्यक्षताक्षतानि । ˙ उदुम्बरादय एकदेशे समुदायशब्दाः शाखाभिधानाः । पलाशाभिधायिन इत्येके । लुबन्तैः शब्दैरभिधानं मुख्यमेवेति । इन्द्वैकवद्भावादेकवचनमेव(कारेण च) । गोवालैर्जातिनिर्देशादेकवचनम् । पूर्वं मिश्रीकृत्य गाः प्रोक्षति । ˙ शिवो भव शिवो भवेत्येष प्रोक्षणमन्त्रः । प्रतिद्रव्यमावृत्य [sic] वीप्सासंभवात् । वृषाणमेवेत्येवकारकरणं पुंबहुत्वे च प्रधानस्यैकप्रायम्यार्थम् । सर्वेषामेवेत्येके । शिवो हैव सुखहेतुग[र्गा]वां शूलगवो देवोवश्यमेव तस्मिन्कृते भवतीत्यर्थवादः । अनेनेति शान्त्यर्थं गवां शूलगवमिति प्रतिपादितं भवति । ˙˙

8 ˙˙ क्षैत्रपत्यं क्षेत्रपतिदेवताकं पयसि स्थालीपाक-

मौपासन एवापूर्विकेन विधानेन श्रपयित्वा ·· तमादायो-
पनिष्क्रम्य। गवां मार्गे तासामेव साधारणपथि। अनग्नौ
भूमावेव। ··· एनमिति पूर्वापेक्षं पूर्ववदौपासन एवा-
स्यापि श्रपणार्थमनग्नौ यागादन्यच श्रपणं मा भूदिति।
अनग्नाविति वचनं प्राचीनप्रवणदेवयजनचोदनेति कृत्वा
तत्रौपासनं नीत्वा होमो मा भूदिति। क्षेत्रस्य पतिमिति
वचनमसमासेन वाल्क्समासेन वा देवतेति ख्यापनार्थम्।

9. ·· पलाशेष्वपरेण होमदेशं स्थापितेष्वायतनभूतेषु
कुटीस्थानीयेषु वा। तं क्षेत्रस्य पतिं। तत्रैवावाहयति यथा
शूलगवमा त्वा वहन्त्वित्यनेन मन्त्रेणेत्यर्थः। उपस्पर्शनोदक-
दानेन वावाहनातिदेशेनैवातिनिर्दिश्यते। दृष्टार्थत्वायावा-
हनस्य चेत्यपरे। केचित्तु चतुर्षु सप्तसु वा पलाशेष्विति पूर्वाङ्गं
मन्यन्ते। तेषां पर्णेषु होमः। तत्रानग्नाविति वचनमनर्थकं
स्यात्। तस्मादुत्तराङ्गमेव।

10. नूर्तं शीघ्रं यजते। कुतः। यतः स देवः पाकः पच-
नशीलस्त्वीदृशस्तस्मात्। तत्र प्रयोगः। परिस्तीर्य होमदेशं
तमपरेण कुटीं कृत्वा तत्र यथोक्तं पलाशानि स्थापयित्वा
तेष्वावाहयत्या त्वेति। स[श]र्वत्येतस्य क्षेत्रस्य पत ऊह्यः।
तत्रोदकं प्रदाय कृत्स्नमेव चरुमुपस्पर्शयत्युपस्पृशतु क्षेत्रस्य
·पतिः क्षेत्रस्य पतये स्वाहेति। ततोऽभ्याहृत्य चरुमावाहन-
मात्रमेव वा कृत्वा परिषिच्य होमदेशं दर्व्योपहत्य क्षेत्रस्य
पतये स्वाहेति हुत्वा पुनरग्नये स्विष्टकृते स्वाहेति सौविष्ट-
कृतीं जुहोति। ततः परिषेकविसर्गः।

12 ···· सनाभयो ज्ञातयः। ·· किमुक्तं भवति। सकु-

स्यानामेव ज्ञातीनां प्राशनं नान्येषाम्। कुलान्तरसंक्रान्तानां प्रत्तानां स्त्रीणां नास्तीति। अ[या]थैवैषां ज्ञातीनामात्मीये कुले प्राशनधर्मः प्रवर्तते तथा प्राश्नीयुरिति। अथेति वचनं तदानीमेवारण्ये प्राशनार्थं च ग्रामं प्रविश्य मा भूदिति। एतस्येति याम्यनिर्देशार्थः। क्षैत्रपत्यस्येति शूलगवस्यातिरिक्तस्यापि प्राशननिवृत्त्यर्थम्। पूर्वेषां प्रतिषिद्धं हि।

## Khanda 10

1 मासि भवं श्राद्धं मासिकम्। ··· अत्र कालनियमनिमित्ता द्रव्यनिमित्ताश्च फलविशेषा देशविधयो धर्मसूक्ताः (Dh II, 16, 8, 23 17, 17)।

2 अथ पितृभ्यो होमभोजनार्थमन्नं संस्कृत्य। दक्षिणाग्रान्दर्भान्ब्राह्मणानामासनार्थं कल्पयित्वा। ब्राह्मणाञ्छुचीनागन्तुकसहजदोषरहितान्नियमवतश्च। मन्त्रवन्तो विद्यावन्तः। नियमवन्त इत्येकेषाम्। ·· अयुजस्त्रिप्रभृतीनयुक्तसंख्याकान्। योनिगोत्रमन्त्रैरात्मनोसंबन्धान्। योनिसंबन्धा मातुलमातामहप्रभृतयः। गोत्रसंबन्धाः सगोत्राः। मन्त्रसंबन्धा ऋत्विक्शिष्याचार्याः। ·····

3 अर्थापेक्षः प्रयोजनापेक्षः प्रयोजनमपेक्षमाणः। अस्मिन्भोजने ममेदं कार्यं भविष्यतीति न भोजयेत्। ·····

4 यज्ञोपवीत्यग्निमौपासनमुपसमाधाय। तं दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्य प्रागुदगग्रपक्षवत्पश्चात्पुरस्ताच्च दक्षिणायान्कृत्वा। ·· दर्वीमुपस्तरणाभिघारणार्थं स्रुवं मेक्षणं चाधिकं प्रयुनक्ति। पूर्ववदेव परिधयः। ·· एकपवित्रेणाज्यं

संस्कृत्येति वाच्ये गुरुनिर्देशः प्रदर्शनार्थः। तेन प्रणीतादिपवित्रकार्यं तेनैव स्यात्। ततः प्राचीनावीतिना [sic] ब्राह्मणान्कृतपादशौचानाचान्तान्दत्तेष्वासनेषूदङ्मुखान्प्रागपवर्गान्पित्रे पितामहाय प्रपितामहायेति संकल्प्यैकैकस्य त्रींस्त्रीन्प्रागपवर्गमुपवेशयेत्। प्राश्नंतु भगवानिति कर्ता ब्रूयात्। प्राश्नवानितीतरे प्रत्याहुः। ······ परिषेककाले देव सवितरित्यनेन यः परिषेकस्तं प्रसव्यं परिषिच्य। ·· औदुम्बर्या दर्व्या जुहोत्याघारादिहोमान्।

6 एतामेव दिशं दक्षिणां प्रत्यपः प्रसिञ्चति। यथा दूरं गच्छन्ति तथाञ्जलिना सिञ्चति। ·· दक्षिणाः पितरो दक्षिणा वृद्धि[ः] पितॄणामिति दर्शनादेवेति दिशं दक्षिणामिति गम्यते। एवकारकरणमावाहनमपि तामेव दिशमाभिमुख्येन क्रियत इति ज्ञापनार्थम्।

## Khaṇḍa 11.

1. ·· आज्येनैव जुहोति सोमाय पितृमत इति यथोक्तं षोडशाज्याहुतीः स्वधानमस्कारस्य प्रधानार्थत्वात्। सर्वत्र तद्वत्तु नास्ति स्वाहाकारः। अथाप नामधेयैर्जुहोति। इहाथशब्दः पूर्वसंबन्धार्थः। तेन पितृपितामहप्रपितामहनामधेयैश्चतुर्थ्यन्तैर्होतव्यम्। जुहोतिवचनं द्विपितृकस्यापि होमाभ्यावृत्तिनिवृत्त्यर्थं न तस्य द्वाभ्यां नामधेयाभ्यां यथालक्षणं समस्तद्विचतुर्थ्यन्ताभ्यां होतव्यम्। यन्मे माता। यन्मे पितामही। यन्मे प्रपितामहीत्यत्रोहप्रदर्शनार्थत्वात्पितृशब्द-

स्यापि पितामहप्रपितामह इति शब्दाभ्यामूहः [पितामह । प्रपितामह इत्यूहः] कार्यः पितामहो वृङ्क्ताम् । प्रपितामहो वृङ्क्तामिति । वहाज्यमित्यत्रापि पितामहेभ्यो यत्रैतानि-[तान् । प्रपितामहेभ्यो यत्रैतानि]ति संनामः ।

2 अत्रापि प्रदर्शनार्थत्वादन्नस्य कूल्या इत्यूहः । केचित्तत्र मृष्यन्ति श्राद्धस्यौदनस्य कूल्यास्तीति [?] नार्थवा-त्त्वाद्वपाया मेदस इति शब्दान्तरदर्शनादुपस्तरणाभिघार-णार्थेनाज्येन द्रव्यत्वस्य विद्यमान[त्वा]च्च । अत्रैके वर्णयन्ति पूर्वानुक्रान्ताः षोडशाज्याहुतीरन्नस्य जुहोतीति । अपर आ-नन्तर्याद्वहाज्यमित्येतासामेव तिसृणाम् । इत्युदीच्यानामपि पाठः । एव ते पठन्त्यथाज्यस्य जुहोति वहाज्यं जातवेद इति । तत्राथशब्द आज्यस्य ग्रहण च । एवमन्नस्य जुहोतीत्यत्र ता-सामेव संप्रत्ययार्थम् ।

3 अत्रापि पूर्ववदथशब्दो वारुण्यादिनिवृत्त्यर्थः । एवमन्नस्येत्यनुवर्तनादन्नेनैव सौविष्टकृतीम् । आज्येनेत्येके । ततो यज्ञोपवीती परिषेकादिकर्मशेषं समापयेत् ।

4 अथ प्राचीनावीती ब्राह्मणभोजनार्थमन्नमभिमृश-ति । यदसौ हुतशेषमभिमृशतीति बह्वृचानां हुतशेषादपि किंचित्प्रदिश्याभिमृशेत् । अथशब्दो होमार्थादन्नादस्यान्यत्व-संख्यापनार्थः ।

5 अथ पूर्ववद् ब्राह्मणेभ्यस्तिलोदकं प्रदाय शुद्धोदकं च ततोन्नं प्रदायाङ्गुष्ठेनोपस्पर्शयति प्राणे निविश्येत्यनेन प्रतिपुरुषमावर्त्य मन्त्रम् ।

Khanda 12

1 ˙˙ तृप्तान्ब्राह्मणान्मधु वाता इत्येतं तृचं यज्ञोपवीती श्रावयेदक्षन्नमीमदन्तेत्येतां स्वधामुक्त्वान्यानि च ब्राह्मणानि शास्त्रान्तरे दर्शितानि।.

2 भुक्तवत्सु शेषौदनात्किंचित्किंचिदुपादाय निहितशेषेण सह पिण्डान्निधायावशिष्टमाचान्तेष्वाशयेष्वन्नं प्रकीर्य तेभ्यस्तिलोदकं पूर्ववत्प्रदाय शुद्धोदकं च ततोक्षतान्प्रदाय यथाशक्ति दक्षिणां दत्त्वाक्षय्यमस्त्विति वाचयित्वा तिलोदकशेषं निनीय स्वधास्त्विति ब्रूयात्। अस्तु स्वधेतीतरे। तत उत्थाप्य प्रसाद्योपसंगृह्य तान्भुक्तवतो गच्छतोनुप्रव्रज्य शेषमनुज्ञाप्यानुगतः प्रदक्षिणीकृत्य प्रत्येत्योदकुम्भं° °गत्वा तान्दर्भान्दक्षिणपूर्वतोग्निं दक्षिणाग्रान्संस्तीर्य। दक्षिणपूर्वमवान्तरदेशं गत्वेत्युदीच्यानां पाठात्। तेषु दर्भेषु। अवाचीनपाणिरध आवृत्तपाणिः पित्र्येण तीर्थेन। दक्षिणांस्त्रीनुदकाञ्जलींस्त्रिषु देशेषु निनीय मार्जयन्तामित्येतैः। प्रतिमन्त्रमसाववनेनिङ्क्ष्वेत्यैतैर्नामग्रहणम्।

3 तेषु नियतस्थानेषु ˙˙ एतत्ते ततासाविति पितुर्नाम गृहीत्वा पित्रे पिण्डं ददाति। एवम् ˙˙ पितामहाय ˙˙ प्रपितामहाय। सर्वेषु ये च त्वामित्यनुषङ्गः[1])। सर्वेषु चेहानुक्रान्तानुक्र[क्रं]स्यमानेषु संबुद्ध्या नामग्रहणम्। ˙˙ स कृताकृतो वैकल्पिक इत्यर्थः। तूष्णींग्रहणं मन्त्रनिवृत्त्यर्थम्। अवचनादेव सिद्धिरिति चेत्। तन्न। निनयनादीनामवि-

1) See T S 1, 2 [illegible], 5

शेषोपदेशान्मन्त्रप्रसङ्गात्प्रधानस्य तूष्णीवचनात्तद्वशवर्ति-त्वाच्छेषामपि तूष्णींकत्वात्।

4 नामधेयानीत्येकशेषनिर्देशः। तेनैकस्य द्वयोस्त्रयाणां वा नाम्नां विस्मरण एतैरेव दानम्। अथशब्देन च पृथगधिकारः। पूर्वेषां मन्त्राणां व्यतिषज्य क्रिया मा भूदित्येतदर्थम्। कुतः। अस्मिन्पक्षे मार्जयन्तामित्येव निनयनमन्त्रा भवेयुरर्थात्।

5 अत्रेति वचनं कालनियमार्थं कालान्तरे पिण्डपितृयज्ञे दर्शनात्। तेन ज्ञायते तत्रोक्तः पिण्डदानोपायो द्विपितृकादीनामिहापि भवतीति। आञ्जनाभ्यञ्जनयोरेव समासवचनं क्रमनियमार्थं तयोः। अनुपिण्डमिति वचनाच्चतुर्थस्याप्राप्तिराशङ्क्येत तन्निवृत्त्यर्थं ददातीत्युच्यते।

6 अनुपिण्ड ददाति। तूष्णीं चतुर्थम्। चिर्यहणं प्रतिपिण्डं तृतीयार्थम्।

7 अनुपिण्डं दद्यात्। तूष्णी चतुर्थम्। तैलमभ्यञ्जनमस्त्वित्येके। अविदितनामधेयानि लुप्यन्ते तदादिभिर्वा शब्दैरुपलक्षयेत्।

8 आत्मनो वाससो दशामूर्णास्तुकान्वा कम्बलस्य च्छित्त्वानुपिण्डं न्यस्यति। पूर्वे आत्मनो वयसि [स्या]पञ्चाशद्वर्षतायाः। तूष्णीं चतुर्थम्।

9 उत्तरे वयसि पञ्चाशद्वर्षताया ऊर्ध्वं मन्त्रेणैव न्यस्यति। अन्यतरवचनादेव सिद्धे पूर्वोत्तरग्रहणं वयस्त्वित्वं केषाचिदिहोक्तं तन्मा भूदिहोत्तर आयुषी[ति] तयोर्द्वित्वविषयत्वादिति।

10. अथ यत्र पिण्डार्थमोदन उद्धृतस्तत्पात्रं संक्षाल्योदकेन सम्यक् प्रक्षाल्य । पुत्रानित्यनेन तेनोदकेन सर्वान्पिण्डानुपगम्य । प्रसव्यं परिषिच्य । तत्पात्रं न्युब्जं निवीतं कृत्वा । पाणी व्यत्यस्य पाण्योरङ्गुलीनां व्यतिषङ्गं कृत्वा । · · वहिर्भूतपृष्ठौ पाणी कृत्वेत्येके । एवंभूतेन नमस्कारेणाञ्जलिना नमो वः पितर इत्येतैर्नमस्कारैः पितॄनुपतिष्ठते । षडेते नमस्काराश्चतुर्थ्यन्ताः । तेषु सर्वेषु पितरो नमो च इत्यादेरनुषङ्गः प्राक् प्राजापत्याया इत्येके । यथापाठमेव प्राक् प्राजापत्याया नमस्कारोन्त्य इत्यपरे । अथशब्दः पिण्डाधिकारनिवृत्त्यर्थः । तेनोक्तं तन्त्रेण सर्वेषां सकृत्परिषेक इति । प्रतिपिण्डमपि केचिदिच्छन्ति । इह पिण्डपितृयज्ञपटले च तुल्यग्रन्थेषु तत्रोक्तं व्याख्यानमिह द्रष्टव्यमिहोक्तं च तत्रापि ।

## Khanda 13.

1. · · प्रतिमन्त्रं त्रीनुदकाञ्जलीन्दक्षिणापवर्गान्निनयति पित्रादिभ्यः । तत इति वचनं तूष्णीं चतुर्थमित्याशङ्कानिवृत्त्यर्थम् ।

2. प्रत्येत्योदकान्तात् । प्रतिष्ठितं स्थालीनिष्कासम् । उदपात्रेण सहोदकमासिच्य सकृन्निष्कासः । तस्य सोदकं पात्रं पूरयित्वा · · उपप्रवर्तयति । पिण्डानां समीपे दक्षिणापवर्गं निनयतीत्यर्थः । प्रत्येत्येति वचनमुदकाञ्जलिदेश एवापां प्रवर्तनं मा भूदिति । एतावत्कृत्वा सर्वेषु दत्तेषु सर्वात्मनः शेषं समवदायाश्नीयादित्येतत्कर्तव्यम् । · ·

3 · · माध्यावर्षः प्रो[प्रौ]ष्ठपदी मासस्तत्र भवं माध्यावर्षम् । अत्रापां प्रसेक उदपात्रोपप्रवर्तनं च न स्तः । · ·

## Khanda 14

1 अष्टका नाम नित्यः पितृकार्यसमुदायः। ··

2 ··· एका प्रधानाष्टका यथैकपुरुष इति प्रधानपुरुष उच्यते। किमपेक्ष्य प्राधान्यम्। हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणां याश्चतस्रोऽष्टम्यस्ताः सर्वा अष्टकास्ता अपेक्ष्य। किमर्थमेतद्वचनम्। तस्या[ः] पूर्वेद्युरुत्तरेद्युश्च कर्मविधानार्थम्। यद्येवं तस्य सप्तम्यामनूराधैरित्येव वक्तव्यम्। एवं तर्हि। कालसंयोगादष्टकाशब्दः कर्मणीदं चाष्टकादीनां प्राधान्यमिति ज्ञापनार्थम्। किमेतस्य ज्ञापने प्रयोजनम्। समाख्यासामर्थ्यात्सर्वास्वप्यष्टकेष्वातः कार्या स्यादस्यास्तु प्राधान्यान्नियतौ। किं चैकाष्टकायां दीक्षेरन् (T S 7, 4, 8, 1) एकाष्टकायां क्रयः संपद्यते (T S 7, 4, 8, 2) इत्यत्राप्यस्याः संप्रत्ययः।

› ·· अनूराधेष्विति वचनं माससंदेहनिर्णयार्थं प्रायिकं वां [वा] ततो विशाखायां ज्येष्ठायां सत्यां भवत्येव। ·· पात्रप्रयोगकाले चत्वारि कपालान्यन्यानि च पुरोडाशार्थानि द्रव्याणि पात्राण्यधिकानि प्रयुज्य प्राक् पात्रप्रोक्षणादेकपवि० ०निर्वपति। इममपूपमित्यनेन प्रतिशरावं मन्त्रावृत्तिश्चत्वारि शरावाणीति भेदेन निर्देशनात्। द्रव्यपृथक्त्वादित्येके। तेषां मन्त्रे चतुःशरावशब्दोऽपूपापेक्षत्वान्न विरुध्यते। अन्ये चतुःशरावपरिमाणान्व्रीहीन्सकृदेव निर्वपन्ति भेदलिङ्गविरोधं मन्यमानाः। ·····

' । एतेनैव। ·· एयकारकरणं प्रागूर्ध्वं च पवित्रकार्म

यत्तदनेनैवेत्येतदर्थम्। तान्व्रीहींस्तूष्णीं त्रिः प्रोक्ष्य पात्राणि चतुः प्रोक्ष्य कृष्णाजिनास्तरणादिना दर्शपौर्णमासिकेन विधिना तूष्णीं व्रीहीनवहत्य त्रिष्फलीकरणान्ते प्रक्षालनं निनीय पेषणादिना यथापुरोडाशमेवं चतुर्षु कपालेषु तूष्णीं श्रपयित्वा स्रुवं दर्वीं च संमृज्याज्यं संस्कृत्य पुरोडाशं च तूष्णीमभिघार्योद्वास्य। · · ततोनुप्रवेशिताश्वब्राह्मणा इड्होपवेशनाद्युद्धरणान्तं कृत्वा परिधाय परिधीन्प्रसव्यं॰ ऽभ्याधाय। इध्माधानलिङ्गादाघारवत्ता स्यात्। आज्यभागान्तं कृत्वा मासिकातिदेशपक्षे पितृनावाह्य निनीतापः [१०] प्रसिञ्चति मासीमामिति। लिङ्गविरोधादितरस्मिन्पक्षे नास्त्यावाहनम्। व्याहृतिपर्यन्तं कृत्वोदुम्बर्यौ दर्व्यामुपस्तीर्य मध्यादारभ्यापूपस्य दक्षिणाप्रागपवर्गाण्यवदानानि यथा भवेयुस्तथा पूर्वेण पूर्वेणावदानद्वयेन संततमविच्छिन्नं परंपरमवदानद्वयमभिघार्य। तथा दर्व्यामौ होमप्रदेशे प्रत्यगुदगारभ्य। · · · पूर्वचापीयमेव दर्वी।

5 अथान्नं पूर्वमुद्धृत्य तस्यावदाय जुहोतीयमेवेत्येताभिः। स्वधानमस्कारेण सर्वत्राष्टकायामनादिष्टेषु होमकृत्सु पठितेषु दर्शनम्। प्रायेण स्वधानमस्कारो हि पितृणामिति दर्शनात्। पितृभ्यः स्वधाकार ओदपात्रादिति श्रुतेः। स्वाहावचनात्स्वाहाकारेण चेति केचित्। अथशब्दः पूर्वाहुति[भि]रासां संबन्धार्थः। तेनात्रापि दक्षिणाप्राचीत्येवमादि स्यात्स्वधानमस्कारप्रधानता चास्य प्रयोजनम्।

6 · · · सर्पिर्मिश्रस्येति वचनमाज्यम्[स्या]त्यावेदनार्थम्। उपस्तरणाभिघारणार्थत्वमो[त्वा]नर्थक्यान्मन्त्रवचनं

Khanda 15

2 अत्रापि ब्राह्मणनिवेदनादिस्थापनान्तमतिसर्जनान्तं कृत्वापराह्णे। ·· पात्रसंसादनकाले चतुरः शूलान्य[न]धिकां स्वधितिं च प्रयुज्य मासिकवदाज्यसंस्कारान्तं कृत्वेमां॰ ॰उपाकरोति। ··

3 अथैनामुपाकृतामसंस्कृताभिरद्भिः प्रोक्षति। ··· एनामिति वचनं कार्त्स्न्येनास्याः प्रोक्षणार्थम्। तेनोपरिष्टादधस्ताच्च प्रोक्षितव्यम्। ···

4 तां प्रोक्षितामुल्मुकेन त्रिः पर्यग्नि कृतामपरेण तमग्निं प्रत्यक्शिरसं दक्षिणपादां निपात्य संज्ञा[ज्ञ]पयन्ति। ····

6 ·· श्रपयत उपर्याज्यमासिच्य। ······

7 तानि वपादीनि श्रपयित्वा प्रत्येकमभिघार्योद्वास्य। · ततोनुप्रवेशिताश्चेद्ब्राह्मणा इहोपवेशनविसर्जनान्तं कृत्वा परिधाय परिधीन्प्रसव्यं॰ ॰भ्याधाय पूर्वद्दुर्वद्याहुतिपर्यन्तं कृत्वौदुम्बर्या॰॰।

8 सर्वहुतां वपां जुहोति शेषं वा तस्यौ [स्या उ]त्कृष्यात्स्येव किंचिदवशिष्य [sic] ब्राह्मणान्प्राशयेद्भोजनकाले। उपस्तीर्णाभिघारितां वपामित्येव सर्वहुतत्वे सिद्धे सर्वहुतां वपां जुहोतीति वचनं यथान्यच सर्वं हूयते तथैव होमार्थम्। तेन हिरण्यशकलयोरप्यवधानमपि स्यात्सर्वोत्तरविधित्वार्थम्। एवं पुनर्वचनं हिरण्यशल्कावधानस्य प्रमाणाभावात्। शेषं वा कुर्यादित्येव सिद्धे ब्राह्मणान्प्राशयेदिति वचनं तेन होमनिवृत्त्यर्थम्। शेष[षं] व्याकृत्येत्युदीच्यानां पाठः। तेषां

सर्वहुतत्वमेव वपायाः प्रयोजनं च सर्वहुतवचनस्य हिरण्यशल्कावधानमेव । अयं च सूत्रार्थः । शेषं वपाहृदयमतस्तेभ्योवशिष्टं व्याकृत्य विभज्य वाच्छिद्य द्वयोरग्नौ श्रपयित्वा ब्राह्मणान्भोजयेत् । ब्राह्मणभोजने व्यञ्जनं कुर्यादित्यर्थः ।

9 उपस्थिते ब्राह्मणभोजनार्थेन्ने तस्यौदनस्य मांसस्य हृदयादीनां समवदाय । · उपस्थितवचनात्पृथग्घोमार्थस्य श्रपणमिह नास्ति १ सर्पिर्मिश्रस्येत्यस्यावदानार्थम् । अथवा पात्रान्तर उभयं प्रक्षिप्याज्येन संयुज्य पुनरवदाय जुहुयादित्येतदर्थम् ।

10 · · · हुत्वेति वचनं पूर्वासामाहुतीनां तुल्यत्वख्यापनार्थं वारुण्यादिनिवृत्त्यर्थम् । तेन संवत्सरस्य प्रतिमामित्येतस्यापि स्वधानमस्कारप्रधानता । ओदनस्येति [अन्नस्येति] वचनं सर्वत्र होमेन्नग्रहण ओदनस्यैव ग्रहणं व्यञ्जनस्येति ख्यापनार्थम् ।

13 श्वोभूतेन्वष्टका नाम कर्म । · · संस्कृत्य निवेदनादि मासिकवद्व्याहृतिपर्यन्तं कृत्वा प्राचीनावीती त्वमग्ने अयासि । प्रजापत इत्येताभ्यां स्वधानमस्कारप्रधानाभ्याम् · · जुहोति । स्विष्टकृदादि मासिकवदुदकाञ्जलिदानान्तं कर्तव्यम् ।

14 इह सर्वातिदेश एवम् । आवाहनमन्त्रस्य नियतत्वं नास्ति । अपां प्रसेक पूर्वयोरेवावाहनतुल्यत्वादेषां कर्मणाम् । मन्त्रापि [न्त्रा अपि] यथाकालं मसिकवत्कर्तव्याः प्रतिषेधाभावात् । · · · · ·

## Khanda 16

2. तत्र या पौर्णमासी श्रवणेन नक्षत्रेण संयुज्यते श्रवणेन योगमर्हतीति श्रावणी पौर्णमासीत्यर्थः। ·· अनाहिताग्निरौपासनं श्रावण्यां पौर्णमास्यामिति लघुना सिद्धे तद्वा पौर्णमासीत्यादिगुरुनिर्देशस्य [किं] प्रयोजनम्। यथावस्थितायामेव पौर्णमास्यामन्वाहितेष्वग्निष्विदं कार्यं न पौर्णमास्या उत्कर्षापकर्षे सामर्थ्यादित्येतदर्थम्। औपासनमनाहिताग्निरिति दक्षिणाग्नौ विधानात्। अन्यत्रापि विधीयत औपासनस्याप्युपरिष्टात्सायंहोमस्योपसमाधानमग्निहोत्रस्य स्थानीयत्वात्।

3 ·· अक्षता लाजाः। तथा यवानां ता भवेयुर्व्रीहीणां लाजास्तथान्यत्र दृष्टत्वात्। सक्तवो व्रीहीणां यवानां वा। किंशुकानि पलाशपुष्पाणि। ·· आज्यमसंस्कृतमेव। उपकल्पवचनं लौकिकोपादानार्थं[र्थं]तामेति। उत्तरत्र प्रयोजनवतोराञ्जनाभ्यञ्जनयोरप्यत्रैव संनिधानार्थम्।

4 औपासनं परिस्तीर्य। परिस्तीर्णत्वाद(पः)परिस्तीर्य दक्षिणाग्निम्। दर्वीमाज्यं चोपस्तरणाभिघारणार्थं संस्कृत्यौपासनं परिषिच्य तूष्णीं च दक्षिणाग्निं सर्वतः परिषिच्य। दर्व्यामुपस्तीर्य तेषामेव धानादीनां त्रयाणामन्नानां समवदाय सर्पिर्मिश्रस्य लौकिकेन सर्पिषा मिश्रितस्याभिघारितस्य जुहोति। ·· प्रतिमन्त्रं पात्रान्तरे वान्नत्रयं संप्रक्षिप्य तेनाज्येन मिश्रयित्वा पुनरवदाय जुहोति। अन्नग्रहणं किंशुकाञ्जनाभ्यञ्जननिवृत्त्यर्थम्। एवकारकरणं बलिहरणमप्येतैरेवान्नैः सर्पिर्मिश्रस्य स्यादित्येतदर्थम्।

5 ˙˙ आज्येन लौकिकेन ˙˙ प्रतिमन्त्रं जुहोति । यत्र त्रयस्त्रयः पर्याया एकैको मन्त्रः । पूर्वत्रेह च प्रतिमन्त्रं समिदभ्याधानम् ।

6 पूर्ववत्परिषेकविसर्गं कृत्वोदकुम्भं° °दाय प्राग्विहारादौपासनप्रदेशाद्वोपनिष्क्रम्य गृहेष्वेव प्रागग्रान्दर्भानुपस्तीर्य तेषु तैरेवाद्भिः चतुरः सर्पेभ्यो बलीन्हरन्ति[ति]ये° °इत्येतैर्बलिहरणधर्मेण । तेषु सर्पास्तेभ्य इमं बलिं हरामीत्यनुषङ्गः ।

7. अत्रैषु बलिषु सकृदाञ्जनाभ्यञ्जने दत्त्वा सर्वा[र्पा]नुपतिष्ठते । ˙˙

8 ˙˙ आवसथं स्वगृहम् । ˙˙ यावतो[ता] देशेन कामयेत तावता मम समीपे सर्पा नाप[व]क्रामेयुर्न गच्छेयुरिति तावता देशेन सह परिक्रामेदप श्वेतेत्येतैर्मन्त्रैः सकृदुक्त्वा ।

9 अथ सर्पानुपतिष्ठते समीचीत्येतैः षड्भिः पर्यायैः प्रतिमन्त्रं प्रतिदिशम् । सर्पबलिस्थानस्य पुरस्तात्स्थित्वा दक्षिणतः पश्चादुत्तरतश्चावस्थाय । आद्यैश्चतुर्भिर्मन्त्रैस्तमेव देशमभिमुख उपस्थाय । प्रतिनिवृत्य पश्चात्प्राङ्मुख उत्तमाभ्यामूर्ध्वाभिमुखोधोमुखश्चोपतिष्ठते । अथशब्दो बलिदेश एवोपस्थानम् ।

10 नित्यं प्रतिदिवसमत ऊर्ध्वमेतेन गम्यते विधिनैतान्सर्पबलीन्हरत्या मार्गशीर्ष्या[ः] पौर्णमास्याः । मर्यादायामयम् । आग्रहायणीकर्मण इत्यर्थः ।

11 अस्मिन्नित्येव बलिहरणे किंशुकहोमो न स्यात् । अनेन गम्यते पूर्वहोमाः स्युः ।

12. उदकुम्भेन परिषेकश्चाच न विद्यते। अथवोभयमेकं वाक्यम्। किंशुकहोमोच विद्यते परिषेचनं न विद्यत इति पूर्वेच क्रियापद[दे] नाध्याहर्तव्यम्। एवं किमर्थम्। इयोर्नञो [योरच] प्रतिषेधयोस्तुल्यत्वख्यापनार्थम्। तेन प्राप्रतिषेधो वा होमप्रतिषेधश्च स्यात्। तेन सर्वेषां होमानामिह प्राश्निर्वलिहरणमाचं वा कर्तव्यमिति गम्यते।···
तत्र प्रयोगः। अन्नहोमान्हुत्वा वा बलीन्दत्त्वाञ्जनाभ्यञ्जने दत्त्वोपस्थातव्यम्।

13. मार्गशीर्ष्यां चतुर्दश्यां रात्रावन्ततो बलिहरणं तेभ्य इमं बलिं निरवदास्यनिरवदास्यन्नित्येतेनैवमुदाहरन्ति। केचित्तु यावदुक्तेन हरणमिच्छन्ति।··

## Khaṇḍa 17.

1. आग्रहायणी मार्गशीर्षी पौर्णमासी तस्यां या क्रिया सापि तद्योगादाग्रहायणीत्युच्यते। प्रत्यवरोहिणीति वास्या नामधेयम्।··

2. ··व्याहृतिपर्यन्तं कृत्वा ततः स्थालीपाकस्यावदाय चतस्र आहुतीर्जुहोति।··

3. ··अथशब्द आनन्तर्यार्थः पूर्वसंबन्धार्थश्च। आनन्तर्याद्वारण्यादिनिवृत्त्यर्थः संबन्धात्स्थालीपाकादेव स्विष्टकृतम्।

4. ततः स कृत्वा परिषेकविसर्गादि ·· आलभते।··
तत इति वचनं पूर्वस्य वक्ष्यमाणेश्च संबन्धार्थम्। तेन रात्रावेव होम इति गम्यते। अथवालम्भनस्यैव होमान-

न्तार्थम्। तेनालम्भनान्तं कृत्वा व्यापारान्तरमप्यवश्यं कार्यं कृत्वोपवेशनादि कर्तुं लभ्यते। अन्य आहुः। आदावेव होमस्तदनन्तरमेवालम्भो राचावुपवेशनादि ततश्च प्राक् सायहोमान[मादन]न्तरं निरवदास्यन्बलिहरणमित्यन्वाहुर्मा[न्वहर्मा]र्गशीर्ष्यामित्यादिविधि च मन्यन्ते। तत्र दिवा होमो विरुध्यतेऽस्मिन्ते पायसस्य जुहुयुरिति शास्त्रान्तरे दर्शनात् (Asv II, 3 3) कर्ममध्ये कर्मक्रिया च विरुध्यते सत्या गतौ। तस्मात्ज्ञानविधिनादिति [न स्यादिति]।

5 तेषां गृह्याणाममात्यानां यो गृहपतिः स दक्षिणत उपविशति। तेषामपि प्रकृतवाचिना समर्थनाम्ना निर्देशात्पूर्वमपि होमकालाद्गृह्याः सनिहिता इति गम्यते। शास्त्रान्तरे दृष्टत्वादिह प्रसिद्धत्वादपरेणाग्निमुपवेशनम् (Asv II, 3, 7)।

6 ततो गृहपतेरुत्तरत उपविशन्ति।

7 जननक्रमेणेत्यर्थः। पत्युरुत्तरतो भार्या। ततो वृद्धक्रमेण पुत्रपौत्राः। तत्र यथावृद्धमिति सिद्धे प्रजोत्पत्त्यानुपूर्व्येणेति वचनं गृह्याः सर्वे पुत्रपौत्रादय एवेत्येतदर्थम्।

8 तेषाममात्यानां ये मन्त्रविद उपनीतास्ते मन्त्राञ्ज्योनादीन्वक्ष्यमाणाञ्जपन्ति। अनुपनीताः स्त्रियश्च तूष्णीमेव कर्म कुर्वन्ति।

9 ते सर्वे यथासनं दक्षिणे पार्श्वे प्राक्शिरस(?) उदङ्मुखाः संविशन्ति।

10 ततः शयनात् ˚ उत्तिष्ठन्ति।

11. उत्थायानन्तरमुदस्थामेति जपन्ति । उत्थायेति व- चनमुत्थानाङ्गत्वाय । तेनोत्तरयोरुत्थानयोर्भवति ।

12 एवमस्यां रात्रौ त्रिः संविशन्ति त्रिःस्व[श्च]संजु- होति [संजिहते] । उत्तिष्ठन्त्येवं त्रिरित्येव सिद्धे रात्रेरिति वचनं पूर्वाभ्यां संवेशनोत्थानाभ्यां सहैव त्रित्वं न तत ऊर्ध्व- त्वमित्येतदर्थमिदं च प्रयोजनं न धर्ममात्रम् [नार्धरात्रम्] । श्वपयित्वानन्तरमुपतिष्ठन्ति । उत्थाय जपित्वाचम्य संवि- शन्ति ।

13 स्त्रिय उ[त्रिरु]त्थायाचम्य परिवेषणान्नेन[न्न] उपस्थितेग्निहोमादिपुण्याहादिवाचनान्तं कृत्वैतां रात्रिं सर्वे वसन्ति । अयेत्युपरिशय्याप्रतिषेधो नास्तरणप्रतिषेधः । एता- मिति द्वितीयानिर्देशान्न पूर्वधर्ममात्रं[र्धरात्रं] स्वपनमिति गम्यते । समाप्रमाग्रहायणीकर्म समाप्तानि च गृह्यकर्माणि ।

## Khanda 18

1. अभ्यर्हितत्वादुपाकरणस्य पूर्वनिपातः । किमर्थं युगपत्प्रतिज्ञानं क्रियते । श्रवणापक्षे तैषीपक्षस्येति पृथ- ग्वचनादेव सिद्ध उभयोः संयुक्तत्वख्यापनार्थम् । तेनासंभ- वादकृत उपाकरण उत्सर्गस्याप्यभावः । पारायणे चोत्सर्गस्य भावादुपाकरणमपि स्यात् । केचिदपूर्वाध्ययनार्थे उपाकर- णोत्सर्जने मन्यन्ते । तेषां गृहीतस्यापि स्मरणार्थे अभ्यासेन स्यातामुपाकरणोत्सर्जने । तत्र काण्डं प्रथममुपाकृत्याध्यय- नमुपाकुर्यात् । असमाप्ते काण्ड उत्सर्गकाल आगत उत्सृ- ज्याध्यायं विरम्य पुनरुपाकृत्याध्यायं काण्डं यथाकालमुपा-

कृत्वाधीत्य काण्डं यथाकालमुत्सृज्य विरमितव्यमर्थात्। प्रथम उपाकरणेऽध्यायमुपाकृत्य काण्डमुपाकर्तव्यमर्थात्।

2 श्रावण्याः पौर्णमास्याः पक्षः श्रावणपूर्वपक्ष इत्यर्थः। तस्मिन्वृष्टे देवे जातास्वोषधीषु हस्तेन पौर्णमास्यां वा श्रावण्याम्। ॰ यत्राध्यायः क्रियत आरभ्यते तदध्यायोपाकर्म। जातास्वोषधीष्विति सदिग्धे काले लिङ्गेन निर्णयः। अथवा जातास्वेवोत्कृष्यावकृष्यास्विति प्रौ-[प्रौ]ष्ठपदे वाषाढे वा मासि क्रियार्थम्।

3 शिष्यैरान्वारब्धो व्या॰ ॰त्वा चतुर' पञ्च वा काण्डर्षीञ्जुहोति। काण्डनामानि चत्वारि पञ्च वा प्राजापत्यं सौम्यमाग्नेयं वैश्वदेवं स्वायंभुवम्। सावित्र्यादिपदैः सर्वैश्चतुर्थ्यन्तैर्होमः। सदसस्पतिमिति। इतिकरणान्तत्वात्काण्डोपाकरणविसर्गयोश्च दर्शनात्प्रतीकग्रहणं वा स्यात्। सावित्रीमिति चैकामृचं मन्यन्ते। तेषामृग्वेदादिभिरपि सर्वे चोच्यन्ते। तन्नास्माकम्।

4 त्रीन्वेदस्यादितोऽनुवाकानधीयत आचार्यशिष्या बहुवचनात्। वाचयत्यनारब्धवेदानकृतारम्भांश्च। होमाधिकारे पुनर्हुत्वेति वचनमध्येतॄणा सर्वेषा होमेऽस्त्यधिकार इति स्थापनार्थम्। तेनोक्तमन्वारम्भणं सर्वेषां शिष्याणाम्।

5 ॰॰ अधीयते सर्वांश्चतुरः पञ्च वा।

6 आदिशब्दः प्रकारवाची। तेन वारुण्यादि प्रतिपद्य प्राक् स्विष्टकृदन्तं कृत्वा जयाभ्यातानान्राष्ट्रभृतो जुहोति।

7 ॰॰ द्याम्याध्ययनाद्विरम्य। यथाध्यायं यथाधीत्याध्यायो व्यवस्थितस्तथा कृतान्तादारभ्याध्ययनमध्येतव्यमिति य-

दत्याचार्याः । व्यहानध्यायवचनमेकाहविकल्पनार्थं तस्य धर्मेष्ववचनात् । यथाध्यायमिति वचनमधीयां[ता]नां पुनरादित आरम्भनिवृत्त्यर्थम् । ··

8 तैषीपक्षस्य तैषमासपूर्वपक्षस्य । ··· माघ्यामपि पौर्णमास्यामेके विदधिरे । तदप्येतेन विकल्प[स्य]ते ।

9 ·· सुखा निर्मलाः सुखस्पर्शाः । सुखावगाहाः सुखेनावगाह्या रक्षोग्राहरहिताः । ····· दित्सन्त इवेति दातुमिच्छन्त इवान्योन्यं प्रति । अथवादित्सन्त इवेति पाठः । आदित्सन्तो मुष्णन्त इवान्योन्यम् ।

## Khanda 19

1 ·· त्रयोविंशत्यासनानि कल्पयन्ति । ·ब्रह्मणे कल्पयामि । प्रजापतये कल्पयामीत्येवं सर्वत्र । ·· देवगणग्रहणं दैवेन तीर्थेन तर्पणार्थम् ।

2 ·· किमर्थमिदम् । एतेषां वचनमासनकल्पनार्थमासनं कल्पयामीति । यद्येवं नार्थं उत्तरत्रैषां संकीर्तनादेव सिद्धत्वात् । एवं तर्हि । सप्तर्षीनुपस्थायेत्यत्रैतेषां संप्रत्ययार्थं मानवेन तीर्थेन तर्पणार्थं च ।

5 दक्षिणतो देवगणानाम् ··· वसिष्ठान्तराले ·· कल्पयन्ति ।

6 ततोगस्त्यासनादारभ्योदगपवर्गं प्रागग्रैर्दर्भैरेकवेद्यान्तेभ्य आसनानि कल्पयन्ति । के पुनस्ते । कृष्णद्वैपायनादय इतिहासपुराणान्ता एकपञ्चाशत् [?] । तेभ्योपि निवीतिनः कल्पयन्त्यधिकारादथवा पराशरान्तेभ्यो निवीतिव-

स्थानिनीय कृष्णद्वैपायनादिभ्यो यज्ञोपवीतिनः कल्पयन्ति। देवत्वादेकस्यां च वेद्यां देवगणेभ्यस्तेभ्यः कल्पनं। तेनै-कवेदय एतदन्तत्वादेकवेद्यत्वादिति [?] सर्वत्रान्यच। अत्रान्ये वसिष्ठा दैवेनैव।

## Khanda 20

1 दक्षिणत एकवेद्यान्तानाम्। ˙ ˙ ˙ चतुर्दशभ्यः [?] कल्पयन्ति।

3 ˙˙ पित्रादिभ्यः कल्पयित्वा मात्रादिभ्यः˙˙ कल्पयन्ति।

4 ˙ ˙ कल्पयन्ति। तेष्वासनेपूदकमासिञ्चतीत्यर्थः [?]। एवमुत्तरत्रापि।

5 ˙ ˙ अर्चयन्ति। द्रव्यपृथक्त्वेभ्यावृत्तिः।

6 अर्चयन्ति।

7 ˙ तर्पयन्ति।

9 अपरेण वेदिं तर्पणदेशम्। अग्निमुपसमाधायेत्यादि व्याख्यातम्।

10 ˙ रोपयन्ति। तेन स्व[न]नेन स्थापयन्ति। ए-कवचनादेकैकदूर्वा सर्वेषां मन्त्रेण निर्देशादेव बह्व्यो वा दूर्वाः।

11 उदधिं जलाशयं विलोडनादूर्मिमन्तं कृत्वा। ˙ आजिं शीघ्रगमनं धावन्ति।

12 तत आजिसरणात्प्रत्येत्यान्नहोमान्हुत्वापूपे.°° । अ-थवोत्सर्गदेशात्प्रत्येत्य ग्रामं प्रविश्य कृत्वैवान्नहोममपूपादि-

मिश्रौ°° । अपूपादिग्रहणात्पुण्याहादिवाचनाभावाच्चान्वा-
भावाच्च नास्त्यन्नहोम इत्येके ।

13 विसर्जनस्य भावादुपाकरणमप्यादावस्तीत्युक्तम् ।

14 ब्रह्मयज्ञादनन्तरमेतानेव देवानृषीन्पितॄंश्चोदकेन
तर्पयन्ति । एकवेद्याग्न्यानामृषित्वाद्दर्पिषु देवेषु वान्वभावा-
दस्त्येव तर्पणम् ॥

# INDEX OF WORDS.